# चन्दमामा

A CHANDAMAMA PUBLICATION

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डी'

## विश्वभ्रातृत्वम्

१९२४ तमे वर्षे – तन्नाम गुजरात्विद्यापीठस्य स्थापनस्य चतुर्णां वर्षाणाम् अनन्तरं – गान्धिवर्यः तत्रत्यान् विद्यार्थिनः उद्दिश्य कथनस्य अवकाशं प्राप्तवान्। तदा सः तान् उक्तवान् यत् हिन्दवः, मुस्लिंजनाः, क्रिस्चियन्जनाः, पार्सीजनाः, ज्यूजनाः च सहोदराः इव व्यवहरेयुः इति। "विश्वभ्रातृत्वं न केवलं विश्वासः, अपि तु तत् व्यवहारे पालनीयम् अपि। यदि विश्वभ्रातृत्वे कस्यचित् विश्वासः नास्ति, यदि कश्चित् विश्वभ्रातृत्वं व्यवहारे आनेतुं न इच्छति तर्हि तादृशाय अस्यां संस्थायां नास्ति स्थलावकाशः" इति उक्तवान् सः।

तदीयस्य सम्पादकत्वेन प्रकाश्यमानायां 'यंग् इण्डिया' पत्रिकायाम् अपि सः एतादृशान् एव विचारान् प्रतिपादयति स्म। तरुणाः राज्य-नगर-जाति-मतादीनां विषये अचिन्तयन्तः समग्रदेशस्य हितं चिन्तयेयुः इति सः सुदृढं बोधयति स्म। स्वस्य भाषणेषु अपि सः जनानां पुरतः उपस्थापयति स्म यत् मानवीयता, समानता इत्यादीनां विषये जनाः चिन्तयेयुः इति।

एतया दृष्ट्या विद्याभ्यासः व्यक्तिजीवने प्रमुखं पात्रम् अर्हति। आदिशङ्कराचार्येण उक्तं यत् प्रतिवस्तु, प्रतिजने, प्रतिस्थले च सौहार्दतां मानवः यथा पश्येत् तथा शिक्षणं भवेत् इति। किन्तु दौर्भाग्यं नाम आधुनिकविद्याभ्यासः पूर्णतः बाह्यसम्बद्धः अस्ति, न तु अन्तरङ्गसम्बद्धः, न वा गुणविकाससम्बद्धः।

उन्नतविद्याभ्यासः सर्वेषाम् अपि छात्राणाम् आत्मविकासाय, परिपूर्णताप्राप्त्यर्थं, वाक्, चिन्तनं, कृतिः इत्यादिषु उदात्ततनाम् आनेतुं च साहाय्यकं स्यात्। मानवे परिपूर्णतायाः विकासः एव विद्याभ्यासस्य चरमं लक्ष्यं स्यात्।

सम्पुटः–१०  फेब्रवरी-१९९४  सञ्चिका–११

प्रतिकृतिमूल्यं रू. ४-००  •  वार्षिकं ग्राहकशुल्कं रू. ४८-००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अट्टाधारिका - A beam
अनुरक्तिः - Affection
अन्विष्यति - Searches
अपर्याप्तता - Insufficiency
अभिप्रेतः - Contemplated
अभ्यर्थनम् - Demand
अवलम्ब्य - Having taken to
अवहेलनम् - Contempt
आलुकम् - Potato
उपचयः - Crop
उपजीव्यत्वम् - Dependence
उपलेपनम् - To overspread
उरोभागः - Chest
उषितवती - Lived
कण्टकाकीर्णः - Thorny
कन्दम् - A tuber (vegetable)
कर्णेजपः - One who Carries tales
किणः - A scar
कारण्डवः - Duck
गुणनम् - Multiplication
गोभरः - Manure
घ्राणशक्तिः - Power of smell
चिरकालतः - Since a long time
जवनिका - Curtain
झरी - Mountain stream
दोहदम् - To grow fruits out of season
दोहनम् - Milking
नेयदीपः - Lantern
पिशुनवचनम् - Tales
प्रत्युत - Instead of
प्रसृतः - Spread over
प्रातिनिध्यम् - Representation
भषति - Barks
मण्डूकः - Frog
मध्यवर्ती - Mediator
रञ्जयति - Shines
लवित्रम् - Sickle
विश्वासार्हता - Credibility
वीथी - Street
वृतिः - Fence
सर्पति - Crawls
सुप्रीतः - Pleased

* * * *

वार्ताविशेषः–

# उभयोः कृते शान्तिनिमित्तं नोबेल्-पारितोषिकम्





प्रतिवर्षं डिसेम्बर्मासे प्रपञ्चस्य सर्वेषां दृष्टिः नार्वेदेशस्य राजधान्याम् ओस्लोनगरे केन्द्रीकृता भवति। यतः नोबेल्-पारितोषिक-निर्णायक-समितिः अत्र अस्ति। एतस्मिन् वर्षे डिसेम्बर् १० दिनाङ्के प्रवृत्तस्य नोबेल्-पारितोषिक-प्रदान-समारम्भस्य अपूर्वं वैशिष्ट्यम् अस्ति।

प्रपञ्चपूज्यौ उभौ नायकौ – दक्षिणाफ्रिकादेशस्य अध्यक्षः एफ्.डब्ल्यू.डिक्लार्क्, आफ्रिकन्-राष्ट्रिय-कांग्रेस्-संस्थायाः अध्यक्षः नेल्सन् मण्डेला च – युगपत् एव शान्तिनिमित्तं नोबेल्पारितोषिकं प्राप्तवन्तौ एतस्मिन् वर्षे, यौ च परस्परं वैरिणौ आस्ताम्।

यौ पूर्वं परस्परवैरिणौ आस्तां तौ नोबेल्शान्ति-पारितोषिकदानार्थं किमर्थं चितौ इति ज्ञातव्यं चेत् अस्माभिः दक्षिणाफ्रिकादेशस्य चरित्रं किञ्चित् परिशीलनीयं भवति।

गतेभ्यः शतात् वर्षेभ्यः दक्षिणाफ्रिकादेशे वर्णभेदनीतिः अनुस्रियमाणा अस्ति। दक्षिणाफ्रिकादेशं प्रति अन्यप्रदेशेभ्यः आगताः श्वेतवर्णीयाः अल्पसङ्ख्याकाः सन्तः अपि अधिकारसूत्रं गृहीतवन्तः आसन्। स्वेच्छानुसारं विधीन् निर्माय बहुसङ्ख्याकान् स्थानीयान् मूलवासिनः कृष्णवर्णीयान् उपेक्षया पश्यन्ति स्म ते। कृष्णवर्णीयानां प्रातिनिध्यं न आसीत् शासने। तेषां विचाराणाम् आदरः अपि न आसीत्। केषुचित् सीमितक्षेत्रेषु तेषाम् उद्योगः आसीत् इत्यतः तेषां विद्याभिवृद्धिः आर्थिकाभिवृद्धिः वा न जाता आसीत्। देशस्य सम्पत्तेः उपयोगे तेषां समानावकाशः न आसीत्।

समानतारहितम् अवमानपूर्णं दास्यजीवनं कियत्कालं वा सोढुं शक्येत? न्याय-समानता-स्वातन्त्र्यार्थं कार्यं कर्तुं काश्चन संस्थाः तत्र उद्भूताः। १९६० तमे वर्षे न्यायवादी नेल्सन् मण्डेला 'आफ्रिकन्-राष्ट्रिय-कांग्रेस्'-संस्थाम् आरब्धवान्। एतेन क्रुद्धः श्वेतजनानां सर्वकारः तस्मिन् उग्रवादित्वम् आरोप्य तं कारागारे अस्थापयत्।

मण्डेलावर्यः २७ वर्षाणि यावत् कारागारे एकाकितया आसीत्। वर्णभेदनीतिं विरुद्ध्य कृतं दीर्घं दृढं युद्धम् आसीत् एतत्। अस्माकं देशे स्वातन्त्र्यकाले महात्मना गान्धिवर्येण कृतेन अहिंसात्मकेन स्वातन्त्र्यसङ्ग्रामेण सदृशम् आसीत् तत्।

तस्मिन् काले देशे शासनविरोधः तु प्रचलन् एव आसीत्। शासने नायकानां परिवर्तनं बहुधा जातम्। १९८९ तमे वर्षे न्यायवादी एफ्.डब्ल्यू. डीक्लार्कुवर्यः नायकपदम् आरूढवान्। जातिभेद-प्रोत्साहकान् शासननियमान् क्रमशः सः दूरीकृतवान्। शासने कृष्णवर्णीयानां प्रातिनिध्यं कल्पितं तेन।

कृष्णवर्णीयाः एतत् अङ्गीकुर्वन्तः शासनम् अभ्यर्थितवन्तः यत् अस्माकं नायकः नेल्सन् मण्डेलावर्यः निर्निबन्धनं कारागारात् मोचनीयः इति। एतदनुगुणं १९९० तमे वर्षे नेल्सन् मण्डेला कारागारात् विमुक्तः अभवत्।

कारागारात् बहिः आगतः सः द्वेषभावनाम् अप्रकटयन् उक्तवान् यत् २७ वर्षेभ्यः पूर्वं यत् लक्ष्यं मम आसीत् तदेव इदानीम् अपि अस्ति इति। "अस्मद्देशे अधिकसङ्ख्याकानां परिपालनं स्यात्, किन्तु 'अधिकसङ्ख्याकानाम् एव' इति न" इति सः उद्घोषितवान्। श्वेतवर्णीयानां सर्वकारेण सह वार्तालापम् आरब्धवान्। 'एका व्यक्तिः एकं मतम्' इत्येतां नीतिम् आधारीकृत्य नूतनस्य प्रजाप्रभुत्व-सिद्धान्तानुगुणस्य क्रमस्य नान्दीरूपं सन्धिं व्यवहारे आनायितवान्।

आफ्रिकन्-राष्ट्रिय-कांग्रेस्-संस्थया अन्याभिः, संस्थाभिः च वर्षत्रयं यावत् कृता चर्चा, शतकात् अनुवृत्तम् अविश्वासभावम् अपनीय प्रजाप्रभुत्वस्य उपस्थापने दोहदायमाना जाता।

शान्तिस्थापनार्थं यदा तत्र प्रयत्नाः प्रचलन्ति स्म तदा तत्र तत्र हिंसाकृत्यानि अपि प्रवृत्तानि एव। तथापि उभौ अपि नायकौ दक्षिणाफ्रिकादेशे प्रजाप्रभुत्वव्यवस्थार्थम् आधारभूमिं परिकल्प्य पवित्रस्य कर्तव्यस्य पालने अविचलौ एव आस्ताम्। तयोः एतत् कृत्यं नोबेल्पारितोषिकसमितेः सदस्यानां दृष्टिम् आकर्षत्।

नोबेल्-पारितोषिक-प्राप्तिवार्तां यदा श्रुता तदा डीक्लर्क् उक्तवान्– "महत् गौरवम् एतत् विनयेन स्वीकरिष्यामि" इति।

दक्षिणाफ्रिकादेशस्य प्रजासु प्रदर्शितं गौरवम् एतत्" इति उक्तवान् नेल्सन् मण्डेला।

"उभयोः कृते अपि पारितोषिकं यत् दीयते तत् तु नितरां शोभते" इति स्वप्रतिक्रियां प्रदर्शितवान् १९८४ तमे वर्षे नोबेल्पारितोषिकं प्राप्तवान् केपटौन् अर्च् बिषप् डेस्माण्ड् टुटूवर्यः।

## अन्ये पारितोषिकविजेतारः

साहित्यम् – टोनी मारिसन् (आफ्रिकन् मूला अमेरिकीया)
वैद्यशास्त्रम् – डा. रिचर्ड् जे. राबर्ट्स् (इङ्ग्लेण्ड्देशीयः) डा. फिलिफ्. ए. शार्प् (अमेरिकादेशीयः)
भौतशास्त्रम् – रस्सल् ए. हाल्स् (अमेरिकादेशीयः) प्रो॥ जोसफ् एच्. टेलर् (अमेरिकादेशीयः)
रसायनशास्त्रम् – क्यारी बि. मुल्लीस् (अमेरिकादेशीयः) मैकेल् स्मित् (केनडादेशीयः)
अर्थशास्त्रम् – राबर्ट् डब्ल्यू. फ्रोजेल् (अमेरिकादेशीयः) प्रो॥ डग्लास् सि. नार्त् (अमेरिकादेशीयः)



# गर्वभङ्गः

कस्यचित् धनिकस्य पुत्री सुकुमारी। सुकुमार्याः सखी सुन्दरी। ते उभे अपि प्रियसख्यौ।

कदाचित् सुदूरात् नगरात् कश्चित् आभरणवणिक् सुकुमार्याः गृहम् आगतवान्। तस्य समीपे सुन्दराणि अमूल्यानि आभरणानि आसन्। तानि दृष्ट्वा सन्तुष्टः सुकुमार्याः पिता पञ्चषान् हारान् क्रीतवान्।

तेन वणिजा सह कश्चित् युवकः अपि आगतः आसीत्। तस्य नाम नलन्दः। नलन्दः अतीव सुन्दरः चतुरः च। तस्य सौन्दर्येण स्वभावादिना च आकृष्टा सुकुमारी नलन्दं परिणेतुम् इष्टवती। किन्तु नलन्दसमीपे गत्वा साक्षात् स्वानुरागं निवेदयितुम् लज्जाम् अनुभवति सुकुमारी। अतः सा प्रियसखीम् सुन्दरीम् आहूय उक्तवती– "अहं नलन्दं परिणेतुम् इच्छामि। तस्य आभरणवणिजः वासः धर्मशालायाम् इति श्रुतं मया। नलन्दः अपि तेन सह एव वसति। भवती तत्र गत्वा नलन्दं मम अनुरागं वदतु। सः यावत् इच्छति तावत् वरदक्षिणां अपि दातुं सिद्धः अस्ति मम पिता इति" इति।

तस्मिन् दिने एव सायङ्काले सुन्दरी नलन्दं दृष्ट्वा स्वपरिचयम् उक्त्वा सुकुमार्याः आशयं निवेदितवती।

तदा नलन्दः तदेकदृष्ट्या सुन्दरीं पश्यन् उक्तवान्– "भवत्याः सौन्दर्येण अहं व्यामुग्धः अस्मि। एतावत्पर्यन्तं भवत्या किम् उक्तम् इत्येव मया न ज्ञातम्। अहं भवतीं परिणेतुम् इच्छामि" इति।

नलन्दस्य एषा प्रतिक्रिया अत्यन्तम् अनिरीक्षिता आसीत् सुन्दर्याः। किं करणीयम् इति अजानती सा अनुक्षणं ततः उत्थाय किमपि अनुक्त्वा वेगेन गतवती। एतयोः सम्भाषणं अन्तः एव स्थित्वा श्रुतवान् वणिक् बहिः आगत्य नलन्दम् उक्तवान्– "सा



सा नलन्दस्य वचनम् एव अङ्गीकृतवती।

केषुचित् एव दिनेषु नलन्दसुन्दर्योः विवाहः सवैभवं सम्पन्नः। विवाहानन्तरं नलन्दः पत्न्या सुन्दर्या सह अन्यं ग्रामं गतवान्।

कानिचन दिनानि अतीतानि। सुकुमार्याः विवाहः तद्ग्रामीणेन एव केनचित् धनिकेन सह जातः।

कानिचन वर्षाणि अतीतानि। सुन्दरी पत्या सह चक्रपुरे अस्ति इति कथमपि ज्ञातवती सुकुमारी। 'मम धनसम्पत्तिः नलन्देन द्रष्टव्या। मम सुखजीवनं दृष्ट्वा सः असूयाम् अनुभवेत्। तदर्थम् एकवारं चक्रपुरं प्रति गत्वा गृहं प्रति आहूय आगन्तव्यम्' इति विचिन्त्य एकस्मिन् दिने सुकुमारी कर्मकर्या सह चक्रपुरं गतवती।

गृहं प्रति आगतां सखीं सुकुमारीं सादरं सत्कृतवती सुन्दरी। सुन्दरी-नलन्दयोः दाम्पत्यजीवनम् अत्यन्तम् आनन्दकरम् अस्ति इति तयोः व्यवहारेण ज्ञातवत्याः सुकुमार्याः असूया द्विगुणिता जाता।

अनन्तरदिने कदाचित् सम्भाषणावसरे सुकुमारी सुन्दरीम् उक्तवती– "सुन्दरि! भवती तु मातृगृहे सुखेन प्रवृद्धा। अत्र तु भवती सर्वाणि कार्याणि अपि स्वयं करोति इति मन्ये। काञ्चित् कर्मकरीं नियोजयितुं शक्यते खलु!" इति।

तदा सुन्दरी मन्दहासपूर्वकं– "मम गृहे कर्मकरी नियोजिता अस्ति एव। किन्तु सा

बालिका चतुरा इव भासते दर्शनेन, व्यवहारेण च। यदि सा भवतः पत्नी भविष्यति, तर्हि भवान् अवश्यं अग्रिमजीवने प्रगतिं साधयितुं शक्नोति। सा सख्याः परतया आगतवती आसीत्। अतः भवान् एव स्वयं सुकुमार्याः समीपं गत्वा भवतः आशयं निवेद्य ताम् अङ्गीकारयतु। तथा चेत् भवान् सुन्दरीं परिणेतुं शक्नुयात्" इति।

अनन्तरदिने नलन्दः सुकुमारीं दृष्ट्वा प्रवृत्तं सर्वं निवेदितवान्।

नलन्दस्य कथनं श्रुत्वा सुकुमारी दिग्भ्रान्ता। 'एषः मां तिरस्कृत्य सुन्दरीं परिणेतुम् इच्छति' इति चिन्तयन्ती सुकुमारी नलन्दविषये कुपिता। तथापि अनन्यगतिका

अन्येषां दृष्टिगोचरा भवितुम् अनिच्छन्ती सर्वाणि कार्याणि निर्वहति" इति उक्तवती।

अनन्तरदिने सुकुमारी स्वगृहं प्रति प्रस्थितवती। तदा सुन्दरी काश्चन शाटिकाः आनीय तस्याः पुरतः स्थापयन्ती उक्तवती– "बहुकालानन्तरं भवती मम गृहम् आगतवती अस्ति। अतः मम स्मरणार्थम् एतासु या भवत्यै रोचते तां स्वीकरोतु" इति।

सुकुमारी अनुक्षणं स्वकर्मकरीम् आहूय उक्तवती– "एतासु शाटिकासु भवत्यै इष्टाम् एकां शाटिकां चिनोतु" इति।

सुकुमार्याः व्यवहारेण चकिता सुन्दरी सुकुमार्याः मुखं दृष्टवती। तदा सुकुमारी उक्तवती– "मम स्तरानुगुणं शाटिकां दातुं भवती कथमपि न शक्नोति। अतः भवत्या दीयमानां शाटिकां कर्मकर्यै ददामि" इति।

तदा सुन्दरी किमपि अनुक्त्वा मौनं स्थितवती। अनन्तरं सुकुमारी स्वगृहं प्रति गतवती।

कानिचन दिनानि अतीतानि। सुन्दरी मातृगृहं गतवती। सुन्दरी मातृगृहम् आगतवती इति ज्ञात्वा सुकुमारी तस्याः समीपं गत्वा उक्तवती– "पतिगृह-गमनात्पूर्वं भवत्या एकस्मिन् दिने भोजनार्थं मम गृहम् आगन्तव्यम्। मया दीयमाना शाटिका स्वीकरणीया" इति।

तदा "अवश्यम् आगमिष्यामि भवत्याः गृहम्। मया सह मम कर्मकरीम् अपि



आनेष्यामि" इति उक्तवती सुन्दरी।

अनन्तरं कदाचित् सुन्दरी सुकुमार्याः गृहम् एकाकिनी एव गतवती। तां दृष्ट्वा सुकुमारी– "कर्मकरी कुत्र भवत्याः?" इति पृष्टवती। तदा सुन्दरी– "भवत्याः गृहं प्रति कथम् ताम् आनेतुं शक्नोमि?" इति प्रतिपृष्टवती।

सुन्दर्याः एतेन वचनेन सुकुमारी 'सुन्दरी मम योग्यतां स्तरं च अवगतवती' इति अतीव सन्तुष्टा।

अनन्तरं भोजनादिकं समाप्तम्। तदा सुकुमारी काश्चन शाटिकाः आनीय सुन्दर्याः पुरतः स्थापयन्ती– "एतासु भवती याम् इच्छति तां शाटिकां स्वीकरोतु" इति सगर्वम्

उक्तवती।

सुन्दरी एकां शाटिकां स्वीकृत्य उक्तवती– "भवती मया दत्तां शाटिकां कर्मकर्यै दत्तवती। अतः अहम् अपि भवत्या दत्तां शाटिकाम् मम कर्मकर्यै ददामि" इति।

तदा सुकुमारी– "बहुमूल्यकाम् एतां शाटिकां भवती कर्मकर्यै ददाति वा?" इति आश्चर्येण पृष्टवती।

"अहं यादृशं वस्त्रं धरामि तादृशम् एव मम कर्मकर्यै अपि ददामि" इति उक्त्वा, सुन्दरी गतवती। एतस्य प्रकरणस्य अनन्तरं सुकुमार्याः मनसः समाधानं नास्ति। 'सुन्दरी चातुर्येण मम अवहेलनं कृतवती' इति चिन्तितवती सुकुमारी।

एकः मासः अतीतः। कस्यचित् कार्यस्य निमित्तं प्रस्थितेन पत्या सह चक्रपुरं गता सुकुमारी सुन्दर्याः गृहं गतवती। तदा सुन्दरी वस्त्रं क्षालयन्ती आसीत्। अतः तस्याः शरीरम् आर्द्रम् आसीत्। मुखे जलबिन्दवः आसन्। सुन्दरी सुकुमार्या दत्तां शाटिकां धृतवती आसीत्।

सुकुमारी सुन्दर्याः मुखं पश्यन्ती उपहासमिश्रितेन स्वरेण पृष्टवती– "मया दत्तां शाटिकां कर्मकर्यै ददामि इत्युक्त्वा भवती एव धृतवती खलु!" इति।

तदा सुन्दरी मन्दहासपूर्वकम् उक्तवती– "भोः, अहम् एव मम कर्मकरी। गृहकार्यसमये केवलम् एतां शाटिकां धरामि। अस्माकं कार्यं अस्माभिः एव क्रियते चेत् उत्तमम् किल! तदा एव मनसः तृप्तिः। अतः एव भगवान् अस्मान् सर्वैः अवयवैः अनुगृहीतवान् अस्ति। शरीरस्य अवयवानां उपयोगं विना कर्मकरद्वारा कार्यं कारयामः चेत् वयं विकलाङ्गसदृशाः भवेम" इति।

सुकुमारी सुन्दर्याः सौजन्यं चातुर्यं च अवगच्छन्ती– "असूयाविष्टा अहम् उत्तमसखीं भवतीं दूरे स्थापयितुम् इष्टवती। इदानीं वस्तुस्थितिम् अवगच्छन्ती मम दोषान् ज्ञातवती अहम्। कृपया मां क्षाम्यतु" इति उक्त्वा ततः गतवती।





# प्रमाणपत्रम्

चन्द्रः नाम कश्चन निर्धनयुवकः पूर्वम् आसीत्। कदाचित् सः मल्लेशनामकस्य आपणे लिपिकारस्य आवश्यकता अस्ति इति श्रुत्वा मल्लेशस्य समीपं गतवान्।

चन्द्रस्य आगमनोद्देशं ज्ञात्वा उक्तवान् मल्लेशः– "लिपिकारस्य आवश्यकता अस्ति इति तु सत्यम् एव। अहं यदा वाणिज्यनिमित्तम् अन्यत्र गच्छामि तदा आपणे विक्रीतानां वस्तूनां धनं लिपिकारस्य हस्ते एव भवति। पूर्वं यः आसीत् सः मां वञ्चितवान्। अतः मम आपणे उद्योगः आवश्यकः चेत् भवता सहस्रं रूप्यकाणि मत्समीपे स्थापनीयानि। अथवा भवतः विश्वासार्हतां प्रमाणीकृत्य महापुरुषाभ्यां द्वाभ्यां लिखितं पत्रं वा आनेतव्यम्" इति।

तदा चन्द्रः क्षणकालं विचिन्त्य– "श्रीमन्! सायम् आपणपिधानस्य अनन्तरं यदि भवान् मया सह आगच्छेत् तर्हि धनं विश्वासप्रमाणकं पत्रं वा दद्याम्" इति उक्तवान्।

सायं चन्द्रः मल्लेशेन सह कुसीदवणिजः वरदराजस्य गृहं गतवान्। प्रवृत्तं सर्वं निवेद्य– "ऋणरूपेण सहस्रं रूप्यकाणि ददातु" इति प्रार्थितवान्।

तदा वरदराजः हसन्– "कुटीरवासिनं भवन्तं बहोः कालतः जानामि अहम्। यदि एषः वणिक् भवते प्रतिमासं द्विशतं रूप्यकाणि दद्यात् तर्हि अपि कुटुम्बनिर्वहणे अपर्याप्तता स्यात्। एतादृशाय भवते दत्तस्य ऋणस्य प्रतिप्राप्तिः किं, वृद्धिप्राप्तिः अपि क्लेशाय भवेत्। अतः ऋणं दातुं न शक्नोमि अहम्" इति उक्तवान्।

ततः चन्द्रः विश्वासपत्रस्य प्राप्त्यर्थम् ग्रामप्रमुखस्य गणेशस्य समीपं गतवान्।

चन्द्रस्य आगमनकारणं ज्ञात्वा गणेशः आश्चर्येण पश्यन्– "चन्द्रः नाम भवान् एव वा? मार्गे भवान् बहुवारं दृष्टः मया। तरुणाः बहवः दुर्व्यसनस्य दासाः भवन्ति। भवान् तु तादृशः न इति द्वित्राणां मुखात् श्रुतं मया। किन्तु एतावत् एव ज्ञात्वा प्रमाणपत्रं कथं वा दातुं शक्येत? भवान् मम आत्मीयः न, बन्धुः अपि न" इति उक्तवान्।

चन्द्रः प्रतिवचनं किमपि अवदन् ततः ग्रामरक्षकस्य समीपं गतवान्। ग्रामरक्षकः चन्द्रस्य अपेक्षां श्रुत्वा उच्चस्वरेण– "अये, ग्रामरक्षकः अहं अनामिकतुल्याय भवते विश्वासद्योतकं प्रमाणपत्रं दद्यां वा? प्रमाणपत्रार्थं मम समीपम् आगच्छतः भवतः कियत् धाष्टर्यम्?" इति उक्त्वा करताडनशब्देन कञ्चित् भटम् आहूय– "अये, एषः प्राचीनः अपराधी इव दृश्यते खलु?" इति पृष्टवान्।

तदा भटः चन्द्रं पश्यन्– "श्रीमन्! एतं जानामि अहम्। रामाम्बाधसमीपे कुटीरे एतस्य वासः। एषः सज्जनः इति वचनम् एतस्य प्रतिवेशिनां मुखात् श्रूयते। किन्तु एषः निरुद्योगी" इति उक्तवान्।

भटस्य वचनं श्रुत्वा ग्रामरक्षकः शान्तिं प्राप्य– "एवं वा? किन्तु निरुद्योगी धनप्राप्त्यर्थं यदाकदापि चौर्ये मतिं कर्तुम् अर्हति। अतः एतद्विषये भवतः दृष्टिः भवतु" इति भटम् उक्त्वा पुनः चन्द्रं पश्यन्– "भोः, शीघ्रम् इतः निर्गच्छतु। महापुरुषाः अत्र गमनागमनं कुर्वन्ति। भवादृशानां स्थितिः अत्र न शोभते" इति उक्तवान्।

चन्द्रः मल्लेशेन सह ततः प्रस्थितवान्। मार्गे सः मल्लेशम् उक्तवान्– "श्रीमन्! भवतः अपेक्षायाः अनुगुणं धनं प्रमाणपत्रं वा दातुं न शक्तवान् अहम्" इति।

तदा मल्लेशः हसन् उक्तवान्– "प्रमाणपत्रं न दीयते इति याभ्याम् उक्तं ताभ्यां भवद्विषये यत् उक्तं तदेव प्रमाणपत्रतुल्यम्। अतः श्वः एव भवान् कार्यार्थं मम आपणम् आगच्छतु" इति।





# विचित्रं पुष्पम्

१

(शताब्दिकापुष्पाणि नौकायाम् आरोप्य माणिक्यपुरीतः निर्गतः उत्तुङ्गः अनिरीक्षितरूपेण नागपुरीनामकं राज्यं प्राप्तवान्। अटविकनायकः कौशवः उत्तुङ्गं सत्कृत्य राजधानीं नीतवान्। उत्तुङ्गस्य साहसप्रवृत्तिं ज्ञात्वा सन्तुष्टः राजा उत्तुङ्गम् उक्तवान् यत् भवतः साहाय्यार्थं कांश्चन भटान् भवता सह प्रेषयिष्यामि इति। तद्दिने सायङ्काले युवराज्ञी मल्लिका 'उत्तुङ्गम् आनयतु' इति आदिश्य कञ्चन भटं प्रेषितवती। तदनन्तरम्.....)

राजभटः उत्तुङ्गं राजभवनस्य कञ्चित् विशालं प्रकोष्ठं नीत्वा– "भवान् अत्रैव तिष्ठतु। भवान् आगतः अस्ति इति विषयं युवराज्ञीं सूचयित्वा आगमिष्यामि" इति उक्त्वा अन्तः गतवान्।

उत्तुङ्गः प्रकोष्ठस्य अन्तः स्थित्वा विशालात् वातायनात् बहिः दृष्टवान्। अधः सुन्दरम् उद्यानं दृश्यते स्म। रमणीयस्य उद्यानस्य दर्शने उत्तुङ्गः मग्नः आसीत्। तदा युवराज्ञी प्रकोष्ठस्य अन्तः आगत्य– "इदानीम् आगतवान् वा?" इति पृष्ट्वा उत्तुङ्गस्य कुशलादिकं विचारितवती।

युवराज्ञ्याः ध्वनिं श्रुत्वा उत्तुङ्गः तां दृष्टवान्। तदा युवराज्ञी– "भवान् पुष्पाणि बहु इच्छति खलु! किन्तु ममापि पुष्पाणि प्रियाणि इति भवान् कथं ज्ञातवान्? सुन्दराणि



एव सुगन्धः प्रसरन् अस्ति इति ज्ञात्वा तानि पुष्पाणि द्रष्टुम् इच्छन्ती अहं पितुः समीपं गन्तुम् उद्युक्ता। तदा 'शताब्दिकापुष्पाणि अन्विष्य राक्षसमृगः आगमिष्यति' इति कौभवः वदन् आसीत् मम पितरम् उद्दिश्य। जवनिकायाः पृष्ठतः स्थित्वा अहं तयोः सम्भाषणं समग्रं श्रुतवती। राक्षसमृगः अपि तानि पुष्पाणि इच्छति इति तु महत् आश्चर्यम्'' इति आश्चर्यं प्रकटयन्ती उक्तवती युवराज्ञी।

युवराज्ञ्याः वचनं श्रुत्वा किं वक्तव्यम् इति न ज्ञातवान् उत्तुङ्गः। तथापि सः हसन् ''अहं किमर्थम् अत्र आनायितः इति प्रथमं वदतु कृपया भवती'' इति उक्तवान्।

उत्तुङ्गस्य वचनं श्रुत्वा युवराज्ञी उक्तवती– ''भवान् राक्षसमृगं सम्मुखीकर्तुं प्रस्थितः अस्ति खलु? राक्षसमृगसदृशस्य शत्रोः सम्मुखीकरणार्थम् भवतः साहाय्यम् आवश्यकम् अस्माकम्'' इति।

तदा उत्तुङ्गः आश्चर्येण पृष्टवान्– ''भवतां शत्रवः सन्ति वा? नागपुर्याः शत्रवः एव न सन्ति इति कौभवेन उक्तं खलु!'' इति।

''आम्! कौभवेन उक्तं तु सत्यम् एव। किन्तु अस्मासु एव कश्चित् शत्रुः अस्ति'' इति उक्तवती युवराज्ञी।

'कः सः शत्रुः?' इति भावनया युवराज्ञ्याः मुखं दृष्टवान् उत्तुङ्गः।

तदा युवराज्ञी उक्तवती– ''मम मातुलः

तानि शताब्दिकापुष्पाणि अहं मम प्रकोष्ठे सुरक्षितं स्थापितवती अस्मि। तदस्तु नाम। शताब्दिकापुष्पाणि कथं शापग्रस्तानि जातानि?' इति पृष्टवती।

युवराज्ञ्याः एतं प्रश्नं श्रुत्वा उत्तुङ्गः क्षणकालं विचलितः। अपरक्षणे एव आत्मानं निगृह्य किमपि अजानन् इव पृष्टवान्– ''युवराज्ञि! शापः वा? किमर्थं शताब्दिकापुष्पाणि शापग्रस्तानि?'' इति।

''अकस्मात् राजभवने सुगन्धः यदा प्रसृतः तदा सुगन्धस्य कारणं किं स्यात् इति सर्वत्र अन्विष्यन्ती आगतवती अहम्। तदा मन्त्रिणा सह समालोचनं कुर्वन् आसीत् मम पिता। पितुः हस्ते पुष्पाणि आसन्। तेभ्यः पुष्पेभ्यः



नागसिंहः एव शत्रुवत् व्यवहरन् अस्ति। मम पिता मातुलं सैन्ये दलनायकत्वेन नियोजितवान् आसीत्। किन्तु तेन न तृप्तः सः। सेनाधिपतिपदवी अपेक्षिता इति मम मातुः द्वारा पितरं याचितवान् सः। पिता एतत् न अङ्गीकृतवान्। एतेन कुपितः मम मातुलः नागसिंहः 'अहं न केवलं सेनाधिपतिः, अपि तु यदि इच्छामि राजा एव भवेयम् इति अन्यान् सहोद्योगिनः वक्तुम् आरब्धवान्। एषः विषयः पित्रा ज्ञातः। अतः पिता मातुलम् आहूय 'राजभवनात् गच्छतु बहिः। इतः परं कदापि भवता अत्र न आगन्तव्यम्' इति उक्त्वा प्रेषितवान्'' इति।

एतत् श्रुत्वा उत्तुङ्गः पृष्टवान्- "इदानीं कः सेनाधिपतिः?'' इति।

"दुर्जयः नाम कश्चन वीरः। पुत्रः नास्ति इति कारणतः पुत्री एव एतस्य राज्यस्य राज्ञी भवतु इति मम पितुः अपेक्षा। प्रजानां हितम् एव स्वहितं मन्यमानः मम पिता नागसिंहात् प्रजानां क्लेशः न भवेत् इति विचिन्त्य अहोरात्रं परिश्रमं करोति इति मम माता वदति'' इति उक्तवती युवराज्ञी।

एतत् श्रुत्वा उत्तुङ्गः- "यः राजा प्रजानां हितम् एव स्वहितम् इति चिन्तयति तादृशस्य राज्ञः क्लेशाः न भवन्ति। सैनिकानाम् अपेक्षया प्रजाः एव राजानं रक्षन्ति'' इति उक्त्वा "इदानीं नागसिंहः कुत्र अस्ति?'' इति पृष्टवान्।

तदा युवराज्ञी उक्तवती- "मम पिता सेनाधिपतिं दुर्जयं सूचितवान् यत्- नागसिंहं उत्तरप्रदेशस्य सीमारक्षणार्थं प्रेषयतु इति। तदनुगुणं दुर्जयः नागसिंहं उत्तरभागं प्रति प्रेषितवान् अस्ति। प्रतिदिनं गूढचारद्वारा नागसिंहविषयिकाः वार्ताः ज्ञायन्ते मम पित्रा। तथापि सुदीर्घं कालं मौनं न तिष्ठेत् सः नागसिंहः। सः कमपि क्लेशं जनयेत्। सिंहासननिमित्तं किमपि कुतन्त्रम् अपि कुर्यात् इति भीता अस्ति मम माता। एतत् सर्वं भवते निवेदनीयम् इति भवन्तम् आनायितवती अहम्। भवान् कानिचन दिनानि अत्रैव तिष्ठति चेत् वरम्'' इति।

युवराज्ञ्याः वचनं श्रुत्वा- "भवतु। किन्तु

अहम् इदानीं प्रमुखकार्यनिमित्तम् अन्यत् राज्यं गच्छन् अस्मि। एतद्विषये राजा अपि 'साहाय्यं करोमि' इति उक्तवान् अस्ति'' इति उक्तवान् उत्तुङ्गः।

तदा युवराज्ञी उक्तवती– ''तं विषयम् अहम् अपि जानामि। नागसिंहविषये मया भवत्समीपे कथितम् इति केनापि न ज्ञातव्यम्। अन्यः कोऽपि विशेषः मया ज्ञायते चेत् भवन्तं सूचयिष्यामि। इदानीं भवान् गन्तुम् अर्हति'' इति।

अनन्तरम् उत्तुङ्गः राजभटेन सह स्ववासस्थानं गतवान्। तत्र कौभवः उत्तुङ्गस्य प्रतीक्षायाम् एव आसीत्। कौभवं दृष्ट्वा उत्तुङ्गः उक्तवान्– ''युवराज्ञी शताब्दिकापुष्पाणां विषये विवरणं पृष्टवती। आवाभ्यां राज्ञा सह यत् सम्भाषणं कृतं, तत् सा श्रुतवती इति मन्ये। किन्तु मया 'शतवर्षेषु एकवारं तत् शताब्दिकापुष्पं विकसति' इति एतावदेव विवरणं दत्तम्'' इति।

''युक्तम् एव कृतवान् भवान्'' इति साभिमानम् उक्तवान् कौभवः। अनन्तरदिने प्रातः राजभटः उत्तुङ्गं कौभवं च आह्वातुम् आगतवान्। तौ द्वौ अपि राजभटेन सह राजदर्शनार्थं प्रस्थितौ। तौ पश्यन् राजा– ''उत्तुङ्गस्य कार्यार्थं दलनायकं नागसिंहं, कांश्चन सैनिकान् च प्रेषयामि। नागसिंहः उत्तरभागस्य सीमायाम् अस्ति। द्वित्रेषु दिनेषु सः आगमिष्यति। तावत्पर्यन्तम् उत्तुङ्गः



अत्रैव तिष्ठतु।'' इति उक्तवान्।

अनन्तरं कौभवः राजानं प्रणम्य, तस्य अनुमतिं प्राप्य उत्तुङ्गं तस्य वसतिस्थानं प्रापितवान्, स्वस्थानं गतवान् च।

उत्तुङ्गः वसतौ भोजनादिकं समाप्य नगरदर्शनार्थं बहिः गतवान्। नगरे उत्तमाः वीथ्यः, विचित्राकाराणि भवनानि च दृष्ट्वा उत्तुङ्गः चकितः। एतत् राज्यं सुभिक्षं, सुखशान्त्यादिभिः समृद्धं च अस्ति इति चिन्तितवान् सः। नागसिंहः यदि क्लेशं जनयति, तर्हि प्रजानां का गतिः इति चिन्तयन् उत्तुङ्गः सायङ्कालसमये स्ववसतिं गतवान्। दिनद्वयम् अतीतम्। तृतीये दिने सायङ्काले कश्चन राजभटः आगत्य



समस्या अस्ति चेत् परिहृत्य इतः गमिष्यामि" इति।

"भवान् चातुर्येण नागसिंहस्य कार्ययोजनाः जानाति चेत्, तं नाशयितुं समर्थः भवति। एषः विषयः निवेदनीयः इत्येव भवान् आहूतः मया" इति उक्त्वा युवराज्ञी प्रकोष्ठस्य अन्तः गतवती।

उत्तुङ्गः ततः स्ववासस्थानं गतवान्।

तस्मिन् दिने एव उत्तरभागतः आगतः नागसिंहः सेनाधिपतेः दुर्जयस्य समीपं गत्वा, तं नमस्कृत्य पृष्टवान्– "मम आह्वानस्य कारणं किम्?" इति।

तदा सेनाधिपतिः उक्तवान्– "उत्तुङ्गनामकः कश्चित् कानिचन पुष्पाणि स्वीकृत्य माणिक्यपुरीतः आगतवान् अस्ति। तस्य उत्तुङ्गस्य साहाय्यार्थं भवान् अन्ये केचन सैनिकाः च प्रेषणीयाः इति राजा निर्णीतवान् अस्ति" इति।

दुर्जयस्य वचनं श्रुत्वा नागसिंहः– "सः उत्तुङ्गः यदि साहसी वीरः च स्यात्, तर्हि सः स्वयम् अग्रे गच्छतु नाम। एतावद्दूरम् एकाकितया आगतस्य तस्य अग्रे गन्तुं साहाय्यकानाम् आवश्यकता अस्ति वा?" इति तिरस्कारभावेन पृष्टवान्।

तदा सेनाधिपतिः उक्तवान्– "सः शूरः उत्तुङ्गः अस्माकं साहाय्यं सम्प्रार्थ्य न आगतवान्। अपि तु एकाकी एव गन्तुं निश्चितवान् आसीत्। किन्तु सः कञ्चित्

उत्तुङ्गम् उक्तवान्– 'युवराज्ञी भवन्तम् आगन्तुं सूचितवती' इति। उत्तुङ्गः तेन सह राजभवनं गतवान्। तत्र उत्तुङ्गम् एव प्रतीक्षमाणा आसीत् युवराज्ञी। सा आगतम् उत्तुङ्गं दृष्ट्वा– "मम मातुलः नागसिंहः श्वः नगरम् आगमिष्यति। भवान् तेन सह जागरूकतया व्यवहरतु। न केवलं तावत्, सः नागपुर्याः सिंहासनस्य आक्रमणार्थं किमपि कुतन्त्रम् कुर्वन् अस्ति वा इति जानातु। भवतः प्रयाणं शुभकरं भवतु। प्रयाणानन्तरं भवान् अत्र प्रत्यागमिष्यति उत ततः एव माणिक्यपुरीं गमिष्यति?" इति पृष्टवती।

तदा उत्तुङ्गः उक्तवान्– "अवश्यम् अत्र आगमिष्यामि। अत्रत्यां परिस्थितिं दृष्ट्वा,

राक्षसमृगम् अन्विष्य प्रस्थितः अस्ति। सः राक्षसमृगः शताब्दिकापुष्पाणां निमित्तं माणिक्यपुरीं प्रविश्य समग्रं राज्यम् उध्वस्थं कुर्वन् अस्ति। तस्य राक्षसमृगस्य आगमनं निवारयितुं राक्षसमृगस्य वासस्थलम् अन्विष्यन् भिल्लयुवकः उत्तुङ्गः शताब्दिकापुष्पैः सह प्रस्थितवान् अस्ति। प्रजानां हितार्थम् राक्षसमृगं सम्मुखीकर्तुम् प्रस्थितस्य उत्तुङ्गस्य धैर्येण साहसेन च सन्तुष्टः महाराजः केचन सैनिकाः तेन सह प्रेषणीयाः इति चिन्तितवान् अस्ति'' इति।

सेनाधिपतिना उक्तम् उत्तुङ्गविषयं श्रुत्वा नागसिंहः ससन्देहं पृष्टवान्— ''कश्चित् भिल्लयुवकः एकाकितया राक्षसमृगम् अन्विष्य प्रस्थितः इति विषये कथं विश्वसितवन्तः भवन्तः?'' इति।

तदा सनेधिपतिः उक्तवान्— ''माणिक्यपुरीतः कश्चित् युवकः एकाकितया एतावद्दूरम् आगतः इत्युक्ते, अत्र सन्देहस्य अवकाशः एव नास्ति। अपि च एषा राजाज्ञा। आज्ञापालनम् एव अस्माकम् आद्यं कर्तव्यम्'' इति।

''भवतु श्रीमन्! भवतः आज्ञां शिरसा निर्वहामि। सः युवकः उत्तुङ्गः मया कदा मेलनीयः?'' इति पृष्टवान् नागसिंहः।

''श्वः अत्रैव अस्मिन् एव समये उत्तुङ्गस्य दर्शनं भविष्यति। इदानीं भवान् गन्तुम् अर्हति'' इति उक्तवान् सेनाधिपतिः।



अनन्तरं नागसिंहः ततः वेगेन निर्गतवान्।

अनन्तरदिने प्रातःकाले एव कश्चन भटः आगत्य सेनाधिपतिं निवेदितवान्— ''महाराजः भवन्तम् आह्वयति'' इति। सेनाधिपतिः अनुक्षणम् राजभवनं गतवान्। तत्र राजा गम्भीरभावेन उपविष्टवान् आसीत्। युवराज्ञ्याः मल्लिकायाः नेत्राभ्याम् अश्रुधारा प्रवहति स्म।

तत्रत्यां परिस्थितिं दृष्ट्वा सेनाधिपतिः पृष्टवान्— ''प्रभो! किं प्रवृत्तम्?'' इति।

तदा राजा खेदेन उक्तवान्— ''शताब्दिकापुष्पाणि न दृश्यन्ते। युवराज्ञ्याः भवने सुरक्षितरूपेण स्थापिताः कुण्डाः तथैव सन्ति। किन्तु पुष्पाणि अदृश्यतां गतानि।

अन्तःपुरं प्रविश्य एतादृशं चौर्यं केन कृतं स्यात्? चोरः महता चातुर्येण चौर्यं कृतवान् अस्ति। एतत् कथं प्रवृत्तं स्यात् इति ऊहितम् अपि न शक्यते'' इति।

एतत् श्रुत्वा– ''राजभवनं ये सम्यक् जानन्ति तैः एव एतादृशं हीनकार्यं कृतं स्यात्। यतः राक्षसमृगः तु राजभवनस्य अन्तः आगन्तुं नार्हति खलु!'' इति उक्तवान् सेनाधिपतिः।

सेनाधिपतेः वचनेन चकिता युवराज्ञी उक्तवती– ''राक्षसमृगः वा? राक्षसमृगः राजभवनस्य अन्तः वा? .... भवान् किं वदन् अस्ति इत्येव न ज्ञायते मया सेनाधिपतिवर्य!'' इति।

पुत्र्याः चिन्तां ज्ञात्वा राजा– ''वत्से! विशेषः कोऽपि नास्ति। तद्विषये अनन्तरम् अहं वदामि भवतीम्'' इत्युक्त्वा सेनाधिपतिम् उक्तवान्– ''तानि शताब्दिकापुष्पाणि प्राप्तुं किं करणीयम् इति अस्माभिः आलोचनीयम् अस्ति'' इति।

तदा– ''प्रभो! शताब्दिकापुष्पाणाम् अन्वेषणार्थम् इदानीम् एव भटान् नियोजयामि अहम्। तेषां पुष्पाणां सुगन्धः अस्ति इति कारणतः अन्वेषणं सुलभाय भवति। अपि च ह्यः आरभ्य राजभवनं प्रति के के आगतवन्तः इति विवरणं रक्षकभटद्वारा विचारयिष्यामि'' इति उक्तवान् सेनाधिपतिः।

किञ्चित्कालानन्तरं सेनाधिपतिः पुनः उक्तवान्– ''महाराज! दलनायकः नागसिंहः ह्यः आगतः अस्ति। उत्तुङ्गस्य साहाय्यार्थं सैनिकैः सह गमनम् अङ्गीकृतवान् च'' इति।

एतत् श्रुत्वा राजा– ''नागसिंहः आगतः वा? ह्यः आरभ्य नगरे एव अस्ति वा? अतः एव प्रायशः विचित्राः घटनाः प्रचलन्त्यः सन्ति'' इति उक्त्वा क्षणकालं विचिन्त्य पुनः उक्तवान्– ''शताब्दिकापुष्पाणाम् अन्वेषणं भवतः आद्यं कार्यम्। अनन्तरम् उत्तुङ्गस्य प्रयाणविषये चिन्तयाम'' इति।

–(अनुवर्तते)





# अपूर्वाङ्गुलीयकानि

आरब्धं प्रयत्नं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "हे राजन्! मध्यरात्रसमये भीकरे श्मशाने किमर्थं भवान् कठोरपरिश्रमं कुर्वन् अस्ति? भवतः परिश्रमः किंनिमित्तकः? किं साधयितुम् इच्छति भवान् इति ऊहितुम् अपि न शक्नोमि अहम्। यदा भवान् अस्मिन् कार्ये सफलः भविष्यति, तदा विवेकशून्यः इव मा व्यवहरतु। अविवेकेन व्यवहरति चेत् तस्य परिणामः कीदृशः भवति इति भवन्तं ज्ञापयितुम् अनङ्गदेशस्य युवराज्ञ्याः अवन्त्याः कथां श्रावयामि। मार्गायास-परिहारार्थम् श्रद्धया शृणोतु" इति।

अनन्तरं वेतालेन कथा आरब्धा–

अनङ्गदेशस्य कस्मिंश्चित् ग्रामे जयः

# वेतालकथा



विजयः अजयः इति त्रयः युवकाः निवसन्ति स्म। तेषां मध्ये महती मैत्री आसीत्।

कदाचित् सायङ्कालसमये ते युवकाः तद्ग्रामे विद्यमाने पर्वते शिवालये सम्मिलिताः। तेषु जयः उक्तवान्– "गृहे अस्माकं किमपि कार्यं नास्ति। अस्माकं माता-पितरौ अस्मद्द्वारा किमपि कार्यं न कारयतः। एतत्कारणतः महती जामिता भवति। व्यर्थं कालयापनस्य अपेक्षया प्रयोजनकरं किमपि कार्यं कुर्मः वयम्" इति।

तदा खिन्नवदनः विजयः उक्तवान्– "सत्यम्। वयं विद्यावन्तः, शक्तिमन्तः च। तथापि अस्मत्तः कस्यापि प्रयोजनं नास्ति इति तु महतः खेदस्य विषयः" इति।

मित्रयोः वचनं श्रुत्वा– "सद्यः एव अस्माकं त्रयाणाम् अपि विवाहः भविष्यति। विवाहानन्तरम् एवं निरातङ्कम् अटितुं न शक्यते। अतः यावच्छीघ्रम् अस्माभिः जनोपयोगि किमपि महत् कार्यं करणीयम्" इति उक्तवान् अजयः।

तेभ्यः प्रसादं दातुम् आगतः शिवालयस्य अर्चकः तेषां युवकानां सम्भाषणं श्रुत्वा मन्दहासपूर्वकम् उक्तवान्– "भवतां चिन्तनं युक्तम् एव। उपयोगरहितं लवित्रं चिन्तनरहिता बुद्धिः च निष्प्रयोजनम् एव इति पण्डिताः वदन्ति। अपि च निस्स्वार्थभावनया यदि परोपकारः क्रियते तर्हि तत् एव महत् कार्यम्। समीपस्थे अरण्ये कश्चन व्याघ्रः स्वेच्छया अटन् अजादीन् गृहीत्वा नीत्वा खादति। एतेन अजपालकाः सर्वे भीताः सन्ति। भवन्तः पराक्रमेण तं व्याघ्रं मारयित्वा ग्रामस्थान् उपकुर्वन्तु" इति।

"महान् पराक्रमः किमर्थम्? सुलभतया तं व्याघ्रं मारयामः। ब्रह्मराक्षसः एव साक्षात् दृष्टिगोचरः भवति चेत् तम् एव मारयामः वयम्" इति एककण्ठेन वदन्तः ते युवकाः ततः गतवन्तः।

अनन्तरदिने प्रातःकाले एव ते त्रयः अपि युवकाः अरण्यं प्रति प्रस्थिताः। मध्याह्नपर्यन्तं समग्रम् अरण्यम् अटितं तैः। किन्तु कुत्रापि व्याघ्रः न दृष्टः। एतेन निराशाः ते बुभुक्षिताः अरण्ये लब्धं फलादिकं खादित्वा

जलं पातुं समीपस्थां लघुझरीसमीपं गतवन्तः। तस्मिन् समये कस्याश्चित् गुहायाः अन्तर्भागतः कश्चन आर्तनादः श्रुतः।

अनुक्षणं ते यतः ध्वनिः श्रूयते स्म तस्यां दिशि धावितवन्तः। गुहां प्राप्तवन्तः च। तावति काले कश्चन महासर्पः फूत्कुर्वन् गुहातः बहिः आगतवान्। ते त्रयः अपि युगपत् स्वखड्गेन सर्पं ताडितवन्तः। त्रिधा विभक्तः सर्पः मृतः।

गुहायाः अन्तर्भागतः कस्यचित् वेतनामयः ध्वनिः श्रूयते स्म। तत् श्रुत्वा ते युवकाः अन्तः गतवन्तः। अन्तः महान् अन्धकारः आसीत्। तत्र मध्यवयस्कः कश्चित् संन्यासी मरणावस्थायाम् आसीत्।

तं संन्यासिनं दृष्ट्वा जयः उक्तवान्— "स्वामिन्! अस्माकं ग्रामस्य समीपे विद्यमानायां पर्वतगुहायां संन्यासी भवान् अस्ति इति अस्माभिः नैव ज्ञातम् आसीत्" इति।

तदा आसन्नमरणः सः संन्यासी— "दुराशया अहं हिमालयतः अत्र आगतवान्। हे पुत्राः! संन्यासी अहं गृहस्थः भूत्वा राजभोगम् अनुभवितुम् इच्छन् गुरोः सकाशे विद्यमानानि अपूर्वाणि त्रीणि अङ्गुलीयकानि चोरयित्वा अत्र आगतवान्। अत्र इदानीं कालसर्पेण दष्टः अस्मि। तानि अङ्गुलीयकानि भवद्भ्यः ददामि। त्रिषु अङ्गुलीयकेषु प्रथमं रक्तवर्णीयम्। यः एतत् धरति सः सन्दर्भानुसारम् उत्तमं चिन्तनं





कर्तुम् अर्हति। द्वितीयम् अङ्गुलीयकं हरितवर्णीयम्। एतस्य प्रयोजनं यत् चिन्तनानुगुणं कथं कार्याचरणं करणीयं, कीदृशेन कार्येण साफल्यं प्राप्यते इति ज्ञायते। तृतीयम् अङ्गुलीयकं नीलवर्णीयम्। एतत् अङ्गुलीयकं ध्रियते चेत् अवशिष्टाङ्गुलीयकद्वयेन यत् प्रयोजनम् अस्ति तत् साधयितुं सामर्थ्यं लभ्यते। भवन्तः त्रयः अपि एकैकम् अङ्गुलीयकं स्वीकुर्वन्तु'' इति उक्त्वा रक्तवर्णीयम् अङ्गुलीयकं जयाय, हरितवर्णीयं विजयाय, नीलवर्णीयं च अजयाय दत्तवान्। अपरक्षणे एव सः दिवङ्गतः।

अनन्तरं ते युवकाः तत्रैव काष्ठानि सङ्गृह्य तस्य संन्यासिनः शवसंस्कारं कृत्वा गृहं गतवन्तः।

तस्मिन् दिने रात्रौ त्रयाणाम् अपि निद्रा न आगता एव। ते त्रयः अपि चिन्तितवन्तः– 'अस्माकं समीपे अङ्गुलीयकस्य स्थापनापेक्षया महाराजाय दत्तं चेत् किमपि प्रयोजनं भवेत्। यदि एतं विषयं गृहसदस्याः जानन्ति तर्हि ते महाराजाय अङ्गुलीयकदानं न अङ्गीकुर्वन्ति। अतः रहस्यरूपेण एव एतत् महाराजाय अर्पणीयम्' इति।

अनन्तरदिने प्रातःकाले एव ते युवकाः अश्वारूढाः राजधानीं गतवन्तः।

जयः प्रथमं महाराजसमीपं गत्वा– ''महाराज! मम समीपे अपूर्वम् शक्तियुतं अङ्गुलीयकम् अस्ति। देशस्य प्रगत्यर्थं यत् चिन्तनम् आवश्यकं, तत्र साहाय्यं करोति एतत् अङ्गुलीयकम्। एतेन प्रजानाम् उपकारः भवेत्। अतः एतत् भवते उपायनीकर्तुम् आगतवान् अस्मि अहम्'' इति उक्त्वा रक्तवर्णीयम् अङ्गुलीयकं महाराजाय दत्तवान्।

तदा- ''अपूर्वस्य अङ्गुलीयकस्य दानेन माम् आनन्दितवान् भवान्। कानिचन दिनानि मम अतिथिरूपेण तिष्ठतु भवान्'' इति उक्तवान् राजा।

अनन्तरं विजयः महाराजसमीपं गत्वा हरितवर्णीयम् अङ्गुलीयकं महाराजाय यच्छन् उक्तवान्– ''प्रभो! कथं कार्याचरणं

करणीयम्, केन रूपेण कार्यसिद्धिः भवेत्, प्रजानां कल्याणं च कथं भवेत्, इति एतेन अङ्गुलीयकेन ज्ञातुं शक्यते'' इति।

एतेन सन्तुष्टः राजा विजयम् अपि उक्तवान् यत्– भवान् कानिचन दिनानि मम अतिथिरूपेण तिष्ठतु इति।

अनन्तरम् अजयः महाराजसमीपं गत्वा नीलवर्णस्य अङ्गुलीयकं दत्त्वा उक्तवान्– ''महाराज! एतेन अङ्गुलीयकेन भवान् प्रजानां हितार्थं यत् चिन्तनं करोति, तच्चिन्तनानुसारं कार्यं साधयितुं सामर्थ्यं प्राप्तुं शक्नोति। अतः भवते समर्पयितुम् एतत् आनीतवान् अस्मि अहम्'' इति।

प्रथमद्वितीययोः अङ्गुलीयकयोः अपेक्षया अपि तृतीयं विशिष्टम् इति चिन्तितवान् राजा। सः अजयम् अपि उक्तवान्– ''भवान् कानिचन दिनानि मम अतिथिरूपेण तिष्ठतु'' इति।

महाराजस्य एका एव पुत्री। तस्याः नाम अवन्ती। पुत्र्याः विवाहः करणीयः, अनन्तरं च जामातुः पट्टाभिषेकः करणीयः इति महाराजस्य इच्छा। किन्तु अवन्ती कमपि राजकुमारं न इच्छति स्म।

महाराजः पुत्र्याः समीपे यस्य कस्यापि राजकुमारस्य विवाहप्रस्तावं करोति चेत् अपि अवन्ती– 'मां परिणेतुम् इच्छन्तः ये आगच्छन्ति, तेषाम् आगमनं मद्विषयकप्रीत्या न, अपि तु राज्याशया। यम् एतस्य राज्यस्य प्रजाः इच्छन्ति, यश्च एतं राज्यं श्रद्धया पालयितुं समर्थः, तादृशेन सह एव मम





विवाहः भवेत्' इति वदन्ती आगतान् राजकुमारान् तिरस्करोति स्म।

महाराजः अपूर्वाणि त्रीणि अङ्गुलीयकानि स्वीकृत्य पुत्र्याः समीपं गतवान्। अङ्गुलीयकानां महिमवर्णनं कुर्वन् उक्तवान् च– "वत्से! एतानि अङ्गुलीयकानि ये आनीतवन्तः ते त्रयः अपि युवकाः रूपवन्तः, बुद्धिमन्तः, पराक्रमशीलाः च। एतानि तैः उपायनरूपेण मह्यं दत्तानि" इति।

तदा अवन्ती– "आम्! किञ्चित्कालात् पूर्वम् उद्याने विहरतः तान् युवकान् दृष्टवती अहम्" इति उक्तवती।

"ते त्रयः अपि योग्याः। अस्माकं राज्यस्य हितम् एव ते चिन्तयन्ति। तैः दत्तानि एतानि अङ्गुलीयकानि तेभ्यः प्रत्यर्पयामि इति चिन्तयन् अस्मि। तेषु भवती कञ्चित् परिणेष्यति चेत् मम आत्मनः शान्तिः भविष्यति" इति उक्तवान् राजा।

पितुः वचनं श्रुत्वा अवन्ती– "तेषाम् अभिप्रायः अपि प्रधानं किल अस्मिन् विषये" इति उक्तवती।

पुत्र्याः वचनं श्रुत्वा महाराजः 'पुत्र्याः अस्मिन् विवाहे इच्छा अस्ति' इति ज्ञात्वा महता सन्तोषेण पृष्टवान्– "प्रथमं भवत्याः अभिप्रायं वदतु। तेषु त्रिषु कं परिणेतुम् इच्छति भवती?" इति।

पितुः वचनेन लज्जिता अवन्ती शिरः अवनमय्य उक्तवती– "तात! रक्तवर्णीयम् अङ्गुलीयकं यः दत्तवान् तं परिणेतुम् इच्छामि अहम्" इति।

विवाहसमस्या सुलभतया परिहृता इति राजा अतीव सन्तुष्टः। अनन्तरकाले राजा अवन्ती–जययोः विवाहं कारयित्वा जयस्य पट्टाभिषेकं कारितवान्।

यदा जयः अनङ्गदेशस्य राजा जातः तदा विजयं मन्त्रिपदव्यां अजयं सेनाधिपतिपदव्यां च नियोजितवान्।

वेतालः एवं कथां समाप्य अवदत्– "हे राजन्! युवराज्ञी 'जयं परिणेतुम् इच्छामि' इति उक्तवती। एतत् तस्याः अविवेकं सूचयति किल! तां परिणेतुम् आगतान् राजकुमारान् प्रत्येकम् अपि सूक्ष्मं

परिशीलयन्ती सा केनचित् व्याजेन तान् निराकृतवती। अन्ते जयं परिणेतुम् अङ्गीकृतवती। किमर्थम् अवन्ती एवं व्यवहृतवती? जयः अपि राज्याशया एव तां परिणयेत् किल! तस्य सिंहासनेच्छा नास्ति इत्यत्र प्रमाणं किम्? यदि तेषु त्रिषु कश्चित् परिणेतव्यः तर्हि नीलवर्णस्य अङ्गुलीयकस्य स्वामी अजयः परिणेतव्यः आसीत् खलु अवन्त्या? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''संन्यासिनः सकाशात् यानि अङ्गुलीयकानि प्राप्तानि, तानि स्वराज्यस्य महाराजाय समर्पणीयानि इति तैः यत् चिन्तनं कृतम्, तेनैव ज्ञायते यत्– ते युवकाः स्वार्थपराः न, धनाकाङ्क्षा-राज्याकाङ्क्षारहिताः च इति। एतं विषयम् अवन्ती सुलभतया गृहीतवती। अङ्गुलीयकानां विषये तु एवम्– यद्यपि त्रीणि अपि अपूर्वाणि एव। तथापि रक्तवर्णीयस्य अङ्गुलीयकस्य एव महत् सामर्थ्यम् अस्ति। येन अङ्गुलीयकेन राजा देशहितार्थम् उत्तमानि चिन्तनानि कर्तुं प्रेरयति। अन्ययोः अङ्गुलीयकयोः मूलप्रेरणादायि अङ्गुलीयकं तु रक्तवर्णीयम् एव। तच्च जयस्य समीपे अस्ति। अतः एव अवन्ती जयं परिणेतुम् इष्टवती। जयः अपि एतत् सर्वं ज्ञात्वा एव विजयं मन्त्रिपदव्यां नियोजितवान्, यतः मन्त्री युक्ताः सूचनाः राजानं सूचयति। अनन्तरम् अजयम् सेनाधिपतिपदव्यां नियोजितवान्, यतः कार्यसाफल्यार्थं शक्तिसामर्थ्यदायि अङ्गुलीयकं तस्य समीपे आसीत्। एतैः कारणैः अवन्ती अविवेकिनी न, अपि तु कुशाग्रमतिः इति ज्ञायते'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# आदेशपालकः शुनकः

श्रीनिवासपुरस्य साप्ताहिकवाणिज्यस्थले कश्चित् शुनकं विक्रेतुम् इच्छन् पार्श्वस्थं स्वशुनकं प्रदर्शयन् जनान् वदति स्म– "भो, भोः, एषः शुनकः आदेशपालकः अस्ति। कष्टकरम् अपि कार्यम् आदेशानुसारं करोति" इति।

तदा तत्र सम्मिलितेषु कश्चित् तं शुनकविक्रेतारं पृष्टवान्– "कष्टकरम् अपि कार्यम् एषः आदेशानुसारं करोति खलु? एतादृशम् आदेशपालकं शुनकं किमर्थं विक्रेतुम् इच्छति भवान्?" इति।

तदा शुनकविक्रेता उक्तवान्– "कारणं किमिति वदामि? ह्यः रात्रौ मम गृहं चोराः आगताः आसन्। एषः शुनकः तेषाम् आदेशं पालयन् न अभषत्, प्रत्युत ते यदा मां मम पत्नीं च बन्धुम् उद्युक्ताः तदा एषः तेषां साहाय्यम् अकरोत्। तेषाम् आदेशस्य अनुगुणं नेयदीपं मुखेन वहन् गृहे स्थितं सर्वं धनाभरणादिकं प्रादर्शयत्। एवम् एतस्य आदेशपालकत्वकारणतः मम सर्वनाशः सम्पन्नः" इति।

एतत् श्रुत्वा तत्र सम्मिलिताः सर्वे उच्चैः हसितवन्तः।



# चन्दमामायाः अनुबन्धः–६२

अस्मद्देशीया पशुपक्षिसम्पत्–

## भल्लूकः

अस्माकं देशे पर्वतेषु शिलामयस्थलयुक्तेषु अरण्येषु च निवसतां भल्लूकानाम् उरोभागे 'V' आकारिका श्वेतरेखा भवति। एतज्जातीयान् भल्लूकान् अल्पश्रमेण एव गृहीत्वा विविधाः क्रीडाः पाठयन्ति जनाः। ग्रामेषु भल्लूकद्वारा विविधक्रीडाः प्रदर्श्यन्ते च। 'साहसचक्रे' (सर्कस्) भल्लूकद्वारा क्रियमाणानि साहसकार्याणि जनाकर्षकाणि भवन्ति। चक्रवत् भ्रमन्तः, अग्निमयेषु वलयेषु लीलया प्रविशन्तः च भल्लूकाः जनान् विशेषतः रञ्जयन्ति।

भल्लूकानां सामान्यदैर्घ्यं २५० सें.मी. भवति प्रायः। भल्लूकाः मनुष्याः इव पादद्वयस्य आधारेण स्थातुं सञ्चारं कर्तुं च शक्नुवन्ति। एतेषाम् औन्नत्यं ६५-७५ सें.मी. भवति प्रायः। एतेषां पादतलस्य आकारः मानवानां पादतलम् एव अनुकरोति। कृष्णवर्णीयानां भल्लूकानां नासिका श्वेतमिश्रितेन धूसरवर्णेन युक्ता भवति। भल्लूकानां नखाः श्वेताः दीर्घाः च भवन्ति।

दिने भल्लूकाः शिलानां मध्ये गुहासु वा शयानाः निद्रां कुर्वन्ति। मधु एतेषां परमप्रियम्। वृक्षे कुत्रापि सुराघटः दृष्टः चेत् एते वृक्षम् आरुह्य सुरां सन्तोषेण पिबन्ति। सुरापानमत्तानां भल्लूकानां व्यवहारस्तु नितरां विनोदजनकः भवति।

भल्लूकानां श्रवणशक्तिः दृष्टिशक्तिः वा न तीक्ष्णा। किन्तु घ्राणशक्तिः तु नितराम् अपूर्वा। घ्राणशक्तिद्वारा एव एते सुदूरात् एव मानवस्य आगमनं ज्ञातुं शक्नुवन्ति।

हिमालयप्रदेशे धूसरवर्णीयाः भल्लूकाः अपि दृश्यन्ते। तथापि भल्लूकानां रोममयत्वं कृष्णमयत्वं च प्रसिद्धम्। दृढतरं ग्रहणं 'भल्लूकग्रहणम्' इति अभेदेन उच्यते लोके।





# आधुनिकाः भारतीयचित्रकाराः

## नन्दलाल् बोस्

आधुनिकचित्रकलाविषयः यदा अस्माभिः चिन्त्यते, तदा नन्दलाल्बोस्महोदयेन लिखितानि अद्भुतचित्राणि स्मृतिपथम् आयान्ति। सः कल्पनाशक्तिमान्, आदर्शशिक्षकश्च आसीत्। बहून् प्रतिभावतः चित्रकारान् प्रोत्साह्य तान् चित्रकलारङ्गे प्रवेशितवान् नन्दलाल्बोस् वस्तुतः अपूर्व-प्रतिभावान्।



नन्दलाल्बोस् गतशतके जन्म प्राप्तवान्। सः स्वप्रतिभया एव कलकत्तानगरे चित्रकलापाठ-शालाम् आरब्धवान्। तत्र सः उदयोन्मुखेभ्यः कलाकारेभ्यः शिक्षणं ददाति स्म। अवनीन्द्रनाथ ठागोर् नन्दलाल्बोस्- महोदयस्य प्रतिभां ज्ञात्वा 'एषः मम योग्यः शिष्यः भवितुम् अर्हति' इति विचिन्त्य तं स्वसमीपं नीत्वा तस्य प्रोत्साहं कृतवान्।

नन्दलाल्बोस् शान्तिनिकेतने १९१४ तमे वर्षे प्रवेशं प्राप्तवान्। अनन्तरं तत्र चित्रकलाविभागस्य

कलाभवनस्य दायित्वं स्वीकृत्य तस्य अभिवृद्ध्यर्थं समर्पणभावेन सेवां कृतवान्।

नन्दलाल्बोस्महोदयस्य चित्राणि दृष्ट्वा विद्यार्थिनः उदयोन्मुखाः कलाकाराश्च प्रेरणां प्राप्नुवन्ति स्म। तस्य चित्रेषु भारतीयचिन्तनशैली स्फुटा दृश्यते स्म। एतेन विमर्शकाः अभिमानिनः च आनन्दम् अनुभवन्ति स्म। नन्दलाल्बोस् बोधयति स्म यत्– ये कलाकाराः भवितुम् इच्छन्ति तादृशैः प्रकृतेः सूक्ष्मतया परिशीलनम्, सम्प्रदायानां ग्रहणशक्तिः, विशिष्टा पद्धतिः च अवश्यं ज्ञातव्या इति। नन्दलाल्बोसुमहोदयस्य चित्रेषु एते त्रयः अंशाः स्फुटं दृश्यन्ते स्म। तेन चित्रितस्य केदारस्य, वृक्षस्य, पुष्पस्य, लतायाः, प्राणिनां, पक्षिणां च चित्राणि अवलोक्यन्ते चेत् तस्य वैशिष्ट्यं ज्ञायते।



भारतीयसम्प्रदायानुसारं चित्रकलारङ्गं आकर्षकरूपेण चित्रलेखने नन्दलाल्बोस् महान् प्रतिभाशाली समर्थः च। अजन्ताचित्रेषु तस्य एतादृशवैशिष्ट्यं दृश्यते।

प्रकृतिरम्यचित्राणि साम्प्रदायिकानि चित्राणि च स्वकीयया अद्भुतकल्पनाशक्त्या पुनः सृष्टवान् सः। नन्दलाल्बोस्महोदयः चित्रकलां न केवलम् उपजीव्यत्वेन, अपि तु तां कलां 'योगसाधना'रूपेण भावितवान्।

नन्दलाल्बोसुमहोदयः स्वजीवितकाले बहूनि सम्मानानि, पारितोषिकाणि च प्राप्तवान्। तथापि सः न गर्वितः, अपि तु सरलजीवनम् अभ्यस्य समग्रं जीवनं चित्रकलानिमित्तम् एव समर्पितवान्। नन्दलाल्बोस् १९६६ तमे वर्षे दिवङ्गतः।

# भवन्तः जानन्ति वा?

१. ऐदम्प्राथम्येन आङ्ग्लभाषया बालानां नाटकं कः लिखितवान्? तस्य नाटकस्य नाम किम्?
२. कर्णाटके प्रसिद्धानि लोहपात्राणि कानि?
३. सर् रोजर् बानिष्टर् किमर्थं क्रीडारङ्गे प्रमुखं पात्रं वहन् अस्ति?
४. 'चार्मिनार्' कुत्र अस्ति?
५. 'क्वयर्'माने कति कागदानि भवन्ति? 'रीम्'माने च कति कागदानि भवन्ति?
६. भारतस्य स्वातन्त्र्यात् पूर्वं लण्डन्नगरे प्रवृत्तेषु त्रिषु वृत्तोत्पीठिका-समावेशेषु भागं गृहीतवन्तौ उभौ भारतीयौ नायकौ कौ?
७. सूक्ष्मकृमिभ्यः व्याधयः (रोगाः) उत्पद्यन्ते इति संशोधनं केन कृतम्?
८. अस्माकं देशेन ऐदम्प्राथम्येन प्रयुक्तस्य युद्धविमानस्य नाम किम्?
९. भारते आर्थिकवर्षस्य आरम्भः एप्रिल्मासस्य प्रथमे दिनाङ्के। इंग्लेण्ड्देशे तादृशवर्षस्य आरम्भः कदा?
१०. कस्याश्चित् प्रसिद्धकथायाः आधारेण दूरदर्शनस्य धारावाहिनी 'माल्गुडिडेस्' निरूपिता। सा आधारभूता कथा का? तस्याः कथायाः रचयिता च कः?
११. 'किवी'नामकाः पक्षिणः कस्मिन् देशे सन्ति?
१२. मयूरसिंहासनं कस्य निमित्तं निर्मितम्?
१३. स्वातन्त्र्येषु चत्वारः प्रकाराः सन्ति। ते च प्रकाराः के?
१४. १८८५ तमे वर्षे मुम्बयीनगरे भारत-राष्ट्रिय-कांग्रेस्-संस्थायाः प्रथममहासभा प्रवृत्ता। तस्याः महासभायाः अध्यक्षस्थानं केन अलङ्कृतम् आसीत्?

# उत्तराणि

१. सर् जेम्स् ब्यारी। नाटकस्य नाम पीटर् पान्। (१९०८)
२. बीदर्नगरे निर्मीयमाणानि बिद्रिपात्राणि।
३. सः १९५४ तमे वर्षे मे-मासे षष्ठे दिनाङ्के मैल्दूरं चतुर्निमेषाभ्यन्तरे धावन् विक्रमं स्थापितवान्।
४. हैदराबाद्नगरे।
५. २४ कागदानि। २० क्वयर्=१ रीम्।
६. तेजबहद्दूरसप्रू, एम्.आर्. जयकर् च।
७. फ्रेञ्च् रसायनविज्ञानिना लूयि पाश्चर् महोदयेन।
८. पृथ्वी।
९. एप्रिल्मासस्य षष्ठे दिनाङ्के।
१०. 'स्वामी एण्ड् हिज् फ्रेन्ड्स्' नामिका। रचयिता– आर्.के. नारायणः।
११. न्यूजिलाण्ड्देशे।
१२. मोगलचक्रवर्तिनः षाहजानस्य निमित्तम्।
१३. i) वाक्स्वातन्त्र्यम् ii) मतस्वातन्त्र्यम् iii) आर्थिकस्वातन्त्र्यम् iv) भयात् मुक्तिः।
१४. डब्ल्यू.सि. बेनर्जिमहोदयेन।



# विवेकिनौ वैरिणौ

वराहीपुरनामके ग्रामे उभौ प्रबलौ आस्ताम्। तयोः अन्यतरस्य कृषिकस्य भूषणस्य शरीरबलं जनबलं च आसीत्। अपरस्य वणिजः भरणेन्द्रस्य तु धनबलम् अधिकारबलं च आसीत्। तौ उभौ अपि बुद्धिमन्तौ। किन्तु तयोः चिरकालात् वैरम् आसीत्।

'बलवद्भिः सह विरोधः न हिताय' इति जानन्तः वराहीपुरीयाः जनाः तयोः विषये सदा विनयेन एव व्यवहरन्ति स्म।

श्रीशरणः तस्य ग्रामस्य ग्रामाधिकारी। तस्य ग्रामाधिकारित्वं तु नाममात्रेण, यतः सः भूषणस्य भरणेन्द्रस्य च अङ्गीकारं प्राप्य एव निर्णयं करोति स्म। उभयोः अपि अङ्गीकारः यत्र न भवति तत्र श्रीशरणः कदापि न प्रवर्तते स्म। यदि भूषणेन अनभिप्रेतं कार्यं कृतं चेत् मल्लाः विघ्नम् आचरन्ति इति, भरणेन्द्रेण अनभिप्रेतं कार्यं कृतं चेत् उच्चाधिकारिणः आक्षेपं कुर्वन्ति इति च जानाति स्म श्रीशरणः।

कदाचित् तस्य देशस्य राजा चिन्तितवान् यत् कृषिकार्ये गोभरस्य उपयोगः कृतः चेत् उपचयः वर्धते इति। अतः सः निर्णीतवान् यत् सर्वेभ्यः ग्रामेभ्यः गोभरः प्रेषणीयः इति। एतां व्यवस्थां व्यवहारे आनेतुं राजा सर्वान् ग्रामाधिकारिणः मेलयित्वा विषयम् उपस्थापितवान्। सर्वे ग्रामाधिकारिणः एतं प्रस्तावम् अङ्गीकृतवन्तः। किन्तु श्रीशरणः उक्तवान् यत् ग्रामीणैः सह समालोच्य एतद्विषये निर्णेतव्यम् इति।

तदा राजा आश्चर्येण पृष्टवान्– "ग्रामहितार्थम् एव एषा व्यवस्था क्रियमाणा अस्ति। एवं स्थिते त्वं किमर्थम् एतद्विषये प्रष्टव्याः?" इति।



"प्रभो, अस्माकं ग्रामे भरणेन्द्रात् ऋते अन्यः वाणिज्यं कर्तुं न अर्हति। अतः भरणेन्द्रद्वारा गोभरस्य विक्रयणं करणीयं भवति। किन्तु भूषणस्य आदेशात् ऋते अस्माकं ग्रामे कोऽपि भरणेन्द्रात् गोभरं क्रेतुं न अर्हति। भरणेन्द्र-भूषणयोः तु सर्प-नकुलयोः इव परस्परविरोधः। तयोः अङ्गीकारं विना गोभरः अस्माकं ग्रामे विक्रीतः न भविष्यति" इति उक्तवान् श्रीशरणः।

एतत् श्रुत्वा पुनरपि आश्चर्येण पृष्टवान् राजा– "किं तौ राजाज्ञाम् अपि धिक्कृत्य व्यवहरतः?" इति।

"यदि तौ तथा व्यवहरेतां तर्हि एतावता तयोः बन्धनम् अकारयिष्यम्। किन्तु बुद्धिमन्तौ तौ कदापि प्रमादं न कुरुतः" इति उक्तवान् श्रीशरणः।

तयोः व्यवहारस्य विषये राज्ञः कुतूहलं प्रवृद्धम्। राजा अन्यान् ग्रामाधिकारिणः प्रेषयित्वा श्रीशरणं सूचितवान् यत् भवता अत्र स्थातव्यम् इति। तावता तत्र आगतः मन्त्री राजानं निवेदितवान्– "प्रभो! गुप्तचरद्वारा वार्ता आगता यत् पार्श्वराज्ये राज्ञः माधवसेनस्य शासनात् प्रजाः असन्तुष्टाः सन्ति इति। सैनिकेषु अपि राजविरोधः प्रसृतः अस्ति इत्यपि श्रूयते। यदि वयम् इदानीम् आक्रमणं कुर्याम तर्हि अल्पप्रयासेन एव तत् राज्यं स्वायत्तीकर्तुं शक्नुयाम" इति।

"माधवसेनस्य विषये भवता यत् उक्तं तत् युक्तम् एव। किन्तु पूर्वस्यां दिशि स्थितस्य चन्द्रगुप्तस्य का वार्ता? सः प्रबलः एव खलु? यदा वयं माधवसेनराज्यस्य उपरि आक्रमणार्थं गच्छामः तदा चन्द्रगुप्तः अस्मद्राज्यस्य उपरि यदि आक्रमणं कुर्यात् तर्हि अस्माकं का गतिः स्यात्?" इति पृष्टवान् राजा।

तदा मन्त्री उक्तवान्– "प्रभो, एतस्याः समस्यायाः अपि परिहारः चिन्तितः। अस्माकं विदूषकः उभौ दूतौ विशेषतः प्रशिक्ष्य एकं माधवसेनसमीपम्, अपरं चन्द्रगुप्तसमीपं च प्रेषितवान् अस्ति। तौ युक्ते समये

आरोप-प्रत्यारोपैः एतयोः मध्ये शत्रुताम् उत्पाद्य वर्धयतः। अतः भवता माधवसेनः पराजितः चेत् चन्द्रगुप्तः सन्तोषं प्राप्स्यति" इति।

राजा मन्त्रिणः प्रस्तावम् अङ्गीकृतवान्। तदा श्रीशरणः मध्ये उक्तवान्– "प्रभो! भवतः विदूषकः महामेधावी इव भाति। यदि सः वराहीपुरे भूषण-भरणेन्द्रयोः मध्ये वैमनस्यम् उत्पादयेत् तर्हि मम समस्या परिहृता भवेत्" इति।

राजा तत्क्षणे एव विदूषकम् आनाय्य विषयं निवेदितवान्। सर्वं श्रुत्वा विदूषकः श्रीशरणं पृष्टवान्– "भवद्ग्रामे भूषणः भरणेन्द्रः च अतिसमर्थौ किल? एवं स्थिते भवता कथं ग्रामाधिकारित्वं प्राप्तम्?" इति।

"उभयोः अपि समानं बलम्। परस्परकलहः आत्मनाशाय इति तौ जानीतः। यदि एकः ग्रामाधिकारी स्यात् तर्हि अपरः असन्तुष्टः स्यात्। तदा ग्रामाधिकारित्वं प्राप्तवतः कष्टं स्यात्। अतः एव तौ तृतीयं मां ग्रामाधिकारिणं कृतवन्तौ" इति उक्तवान् श्रीशरणः।

"वणिक् कृषिकः च तौ ग्रामे परस्परावलम्बनं विना कथं जीवतः?" इति पृष्टवान् विदूषकः।

"भूषणः कृष्यर्थम् आवश्यकानि वस्तूनि भरणेन्द्रसकाशात् एव प्राप्नोति। किन्तु कदापि साक्षात् भरणेन्द्रात् न क्रीणाति। भरणेन्द्रः अपि तथैव व्यवहरति। उभौ अपि परस्परमेलनं वार्तालापं च कदापि न कुरुतः"





इति उक्तवान् श्रीशरणः।

"एतौ यद्यपि वैरिणौ, तथापि विवेकिनौ। पिशुनवचनैः एव एतादृशाः वशीकरणीयाः। अतः पिशुनवचनकथने समर्थौ उभौ कर्णेजपौ एतयोः समीपं प्रेषयिष्यामि" इति उक्तवान् विदूषकः।

तदा श्रीशरणः राजानम् उद्दिश्य निवेदितवान्– "प्रभो, यावत् विदूषकेण प्रेषितौ जनौ अस्मद्ग्रामे विजयं न साधयतः तावत् पार्श्वराज्याक्रमणक्रमः न आश्रयणीयः" इति।

एतत् श्रुत्वा आश्चर्यचकितः अपि राजा कारणम् अपृच्छन् मौनम् आश्रितवान्।

अनन्तरं विदूषकः भूषणसमीपं शङ्करनामकं, भरणेन्द्रसमीपं गोपालनामकं च प्रेषितवान्। उभौ अपि पिशुनवचनकथने नितरां समर्थौ। प्रतिदिनम् अपि शङ्करः भूषणं भरणेन्द्रविषये, गोपालः भरणेन्द्रं भूषणविषये च बहुधा पिशुनवचनं वदतः स्म। एवं कानिचन दिनानि प्रवृत्तं चेदपि भरणेन्द्र-भूषणौ तु कलहार्थं न उद्युक्तौ।

ततः मासानन्तरं शङ्करः गोपालेन रहसि मिलित्वा– "एतौ उभौ अपि आवयोः कथनात् प्रभावितौ इव न लक्ष्येते। अतः अन्यविधः उपायः आश्रयणीयः आवाभ्याम्। यत् उच्यते तस्य प्रमाणीकरणार्थं साक्ष्यम् अपि स्रष्टव्यम्" इति उक्तवान्।

अनन्तरं शङ्करेण नियुक्तः कश्चन कर्मकरः पश्वाहारे विषयोजनसमये गृहीतः। भूषणेन तर्जनपूर्वकं पृष्टः सः उक्तवान् यत् भरणेन्द्रः एतस्मिन् कार्ये मां नियोजितवान् इति।

एवम् एव गोपालेन नियोजितः कर्मकरः भरणेन्द्रेण गृहीतः। सः कर्मकरः उक्तवान् यत् भूषणः माम् एतदर्थं प्रेषितवान् इति।

आश्चर्यं नाम भूषणः भरणेन्द्रः च अपराधिनौ ग्रामरक्षकाधीनौ कृतवन्तौ, किन्तु परस्परं दोषारोपणं न कृतवन्तौ, न वा न्यायस्थानं गतवन्तौ।

अनन्तरं भूषणः शङ्करम् आहूय– "भवान् भरणेन्द्रविषये बहुधा पिशुनवचनानि उक्तवान् अस्ति इति अहं

जानामि। असत्यकथकः भवान्। यदि आत्मनः सत्यकथकत्वं भवता प्रमाणीकरणीयं तर्हि सप्ताहाभ्यन्तरे भरणेन्द्रसम्बन्धिनी वास्तविकवार्ता भवता आनेतव्या। अन्यथा 'मम धेनुभ्यः भवान् विषं दातुम् उद्युक्तः आसीत्' इति न्यायाधिकारिणं वदिष्यामि'' इति उक्तवान्।

भरणेन्द्रः अपि गोपालम् एवम् एव उक्तवान्। एतदनन्तरं रहसि मिलितौ शङ्कर-गोपालौ समालोचनं कृतवन्तौ— ''महता चातुर्येण सज्जीकृते असत्यजाले अपि एतौ न पतितौ एव। इदानीं वा यदि आवां तयोः प्रियकरीं शत्रुसम्बद्धां वास्तविकवार्तां तौ न वदेव तर्हि आवयोः रहस्यं प्रकटितं भवेत्। राज्ञः गौरवस्य हानिः स्यात्। अतः एवं यथा न भवेत् तथा प्रयत्नः करणीयः आवाभ्याम्'' इति।

अत्रान्तरे ग्रामाधिकारिणः द्वारा गोभरवार्ता भूषणेन भरणेन्द्रेण च ज्ञाता। 'गोभरगोण्यः साक्षात् कृषिकेभ्यः एव दातव्याः, वणिकृतः अहं कदापि न स्वीकरिष्यामि' इति उक्तवान् भूषणः। 'गोभरविक्रयणकार्यम् अहं स्वीकरिष्यामि। कृषिकाः मत्तः योग्येन मूल्येन गोभरं क्रेतुम् अर्हन्ति' इति उक्तवान् भरणेन्द्रः। उभयोः अपि वचनं ग्रामे प्रसृतम्। अग्रे किं प्रवर्तेत इति द्रष्टव्यम् इति ज्ञातुम् इच्छतां ग्रामीणानां कुतूहलं प्रवृद्धम्।

अत्रान्तरे शङ्करेण एका वार्ता ज्ञाता— ''भूषण-भरणेन्द्रयोः विचारं यावत्



इत्यतः राजा एतं प्रस्तावम् अवश्यम् अङ्गीकरिष्यति। ग्रामे गोभरवितरण-व्यवस्थाम् अहं स्वीकरिष्यामि। तदा वाणिज्यतन्त्राणि कानिचन ज्ञातानि भवन्ति। तदाधारेण अग्रे अहं वाणिज्यम् अपि कर्तुं शक्नुयाम्" इति उक्तवान्।

एषा वार्ता गोपालद्वारा भरणेन्द्रेण अपि ज्ञाता। सः सन्तोषं प्रकटयन् गोपालम् उद्दिश्य– "भवता एषा वार्ता आनीता यत् तत् महते लाभाय जातम्। अन्यथा अहं राजानं प्रति वार्तां प्रेषयन् स्ववृत्तेरेव कुठारप्रायः अभविष्यम्" इति उक्तवान्।

अनन्तरं ग्रामाधिकारी, शङ्करः, गोपालः च राजधानीं गतवन्तः। राजानं, मन्त्रिणं, विदूषकं च दृष्ट्वा प्रवृत्तं सर्वं निवेदितवन्तः।

"एवं तर्हि इदानीं मया किं करणीयम्?" इति पृष्टवान् राजा।

तदा ग्रामाधिकारी श्रीशरणः उक्तवान्– "प्रभो! 'गोभरविक्रयणं भवता एव करणीयम् इति राजाज्ञा' इति वार्तां भरणेन्द्रं प्रति प्रेषयतु। भूषणस्तु कृषिभूमयः वार्षिककृष्यर्थं मया कृषिकाधीनाः कृताः इति वदन् कृषिकद्वारा गोभरं प्राप्स्यति। यद्यपि तयोः परस्परं वैरम् अस्ति, किन्तु तद्व्याजेन तौ राजाज्ञां धिक्कर्तुं न अर्हतः। अविवेकेन कृतं कार्यम् आत्मनाशाय स्यात् इति तौ जानीतः" इति।

"महाबुद्धिमन्तौ एतौ यदि स्नेहेन भवतः



ग्रामाधिकारी राजानं निवेदयति ततः पूर्वम् एव भरणेन्द्रः कञ्चित् दूतं राजसमीपं प्रेषयिष्यति। सः दूतः राजानं दृष्ट्वा भरणेन्द्रवचनैः राजानं वदति यत् गोभरः कृष्यर्थं नितराम् आवश्यकः एव इत्यतः सः कृषिकेभ्यः साक्षात् दातव्यः, मध्ये मध्यवर्तिनः न काऽपि अपेक्षा इति" इति।

वणिक् अहम् एव एतादृशीं वार्तां प्रेषयामि चेत् राजा मद्विषये नितरां सुप्रीतः भविष्यति इति भरणेन्द्रस्य विचारः आसीत्।

एतं विषयं ज्ञात्वा शङ्करः भूषणं निवेदितवान्। तदा भूषणः सन्तोषं प्रकटयन्– "सन्तोषकरी वार्ता आनीता भवता। वणिक् एव राजानं निवेदितवान्

तर्हि वरम् अभविष्यत्" इति दीर्घनिःश्वासपूर्वकम् उक्तवान् राजा।

शङ्करः गोपालः च विदूषकम् उक्तवन्तौ– "आश्चर्यं नाम आवां पिशुनवचनानि बहूनि कल्पयित्वा उक्तवन्तौ, किन्तु तेषु तौ कदापि न विश्वसितवन्तौ। यदा सत्यविषयः उक्तः तदा क्षणमात्रेण तत्र विश्वासः कृतः ताभ्याम्। सत्यविषयं ज्ञातुम् उभाभ्याम् अपि का व्यवस्था आश्रिता इति तु न ज्ञायते" इति।

तदा विदूषकः हसन् उक्तवान्– "अत्र विशेषव्यवस्था काऽपि नास्ति। भूषणः भरणेन्द्रः च शत्रोः बुद्धिमत्तायां विश्वासं कुरुतः। तौ जानीतः यत् ऊहितुम् असाध्यम् एव कार्यं मम शत्रुः करोति इति। भवन्तौ सामान्यानि पिशुनवचनानि कल्पयित्वा उक्तवन्तौ। अतः तत्र तौ न विश्वसितवन्तौ। तौ सदा विवेकेन व्यवहरतः। विवेकेन द्वेष-स्पर्धा-वञ्चनादिषु प्रवृत्तौ न भवतः। विवेकिनौ वैरिणौ एतौ। एतयोः कारणतः जनहितम् एव सिद्ध्यति" इति।

राजा क्षणकालस्य चिन्तनस्य अनन्तरम्– "एवं तर्हि गुप्तचरैः या सामान्या वार्ता आनीता तस्यां विश्वस्य आक्रमणं न करणीयम् इति खलु तात्पर्यं सिद्धम्? विवेकिनौ वैरिणौ इव अस्माभिः व्यवहरणीयम् इति श्रीशरणस्य आशयः इव भाति। अतः एव सः शत्रुदेशाक्रमणक्रमः झटिति मास्तु इति सूचितवान्" इति उक्त्वा श्रीशरणस्य मुखं प्रश्नार्थकदृष्ट्या दृष्टवान्।

तदा श्रीशरणः विनयेन– "विवेकिनोः वैरिणोः मध्ये निवसता मया यः विवेकः प्राप्तः तदाधारेण किमपि सूचितम्। सूक्ष्मग्राहिणा भवता सुविचिन्त्य यत् निर्णीतं तत् अयुक्तम् इति मया कथं वा वक्तुं शक्येत" इति उक्तवान्।

एवं भूषण-भरणेन्द्रयोः शत्रुतां दृष्ट्वा विवेकं प्राप्तवान् राजा शत्रूणां विषये जागरूकतया व्यवहरन् योग्येन मार्गेण प्रजाः पालितवान्।



# तरणे असमर्थाः मण्डूकाः

राघवपुरन्नामके ग्रामे कश्चन कृषिकः आसीत्। सः कृषिकार्यार्थं कस्माच्चित् कुसीदवणिजः सकाशात् ऋणरूपेण किञ्चित् धनं स्वीकृतवान्। बहूनि दिनानि अतीतानि। कृषिकः ऋणं प्रत्यर्पयितुं न शक्तवान्, अपि च प्रमुखकार्यार्थम् पुनरपि किञ्चित् ऋणं स्वीकृतवान्। मूलधनस्य वृद्धिः दिने दिने अधिका अभवत्। तथापि कृषिकः ऋणं प्रत्यर्पयितुं न शक्तवान्। एतेन कारणेन कुसीदवणिक् कृषिकस्य क्षेत्रं स्वायत्तीकृतवान्। कोऽपि कृषिकस्य साहाय्यं न कृतवान्। तद्ग्रामस्य अधिकारी अपि कृषिकस्य साहाय्यं न कृतवान्। एतेन दुःखितः कृषिकः महाराजसमीपं गत्वा स्वकीयां परिस्थितिं निवेदितवान्। राजा कुसीदवणिजम् आनाय्य कृषिकस्य पुरतः न्यायविचारणम् आरब्धवान्–

प्रथमं राजा कृषिकं पृष्टवान्– "कुसीदवणिजः सकाशात् स्वीकृतम् ऋणं भवता प्रत्यर्पणीयं खलु! एतत् न जानाति वा भवान्?" इति।

तदा कृषिकः– "ऋणप्रत्यर्पणस्य ज्ञानेन किं प्रयोजनं प्रभो! किं मण्डूकाः तरणं न जानन्ति? किन्तु अस्माकं ग्रामस्य मण्डूकाः पञ्चसु वर्षेषु अपि तरणं न ज्ञातवन्तः। अतः ऋणप्रत्यर्पणज्ञानम् अस्ति उत न इति कथनेन किं प्रयोजनम्?" इति।

कृषिकस्य वचनं श्रुत्वा राज्ञः पार्श्वे उपविष्टः मन्त्री उक्तवान्– "एषः कृषिकः उन्मत्तः स्यात्। न्यायविचारणसमये मण्डूकानां तरणविषयः अप्रस्तुतः खलु!" इति।

तदा राजा मन्दहासपूर्वकं मन्त्रिणम् उक्तवान्– "एतस्य कृषिकस्य ऋणप्रत्यर्पणं कारयित्वा कृषिकस्य कुटुम्बस्य धनसाहाय्यं करोतु" इति।

अनन्तरं राजा कृषिकम्– "भवद्ग्रामीणाः मण्डूकाः यदा तरणं ज्ञास्यन्ति, तदा इदानीं भवत्परतया कुसीदवणिजे अस्माभिः यत् धनं दत्तं तत् अस्मभ्यं दातव्यं भवता" इति-उक्त्वा कृषिकं प्रेषितवान्।

राज-कृषिकयोः सम्भाषणस्य गूढार्थम् अज्ञात्वा मन्त्री सन्देहेन महाराजं दृष्टवान्।

राजा मन्त्रिणः आशयं ज्ञात्वा उक्तवान्– "पञ्चभ्यः वर्षेभ्यः ग्रामे वृष्टिः नास्ति। तस्मात् फलसमृद्धिः अपि नास्ति इति सूचयितुं सः कृषिकः एवं भङ्ग्यन्तरेण उक्तवान्" इति।






तपः १ रत्यज्य आकाशमार्गेण अयोध्याम् उद्दिश्य प्रस्थितः हनूमान् मध्येमार्गं वाल्मीकेः आश्रमे अवतीर्णः। वाल्मीकिमहामुनिं नमस्कृत्य– "मुनिवर्य! रामस्य जीवने कथम् एवं प्रवृत्तम्?" इति पृष्टवान्।

तदा वाल्मीकिः मन्दहासपूर्वकम् उक्तवान्– "आञ्जनेय! 'वाराङ्गना इव नृपनीतिः अनेकरूपा' इति वचनं श्रुतं खलु भवता? राज्यपालनम् अतिकठोरम्। प्रजानाम् अभिप्रायं पुरस्कृत्य अनिच्छता अपि राज्ञा बहूनि कार्याणि करणीयानि भवन्ति। शम्बूकवधः, सीतापरित्यागः इत्यादीनि अत्र उदाहरणानि। सीता न परित्यक्ता चेत् किम् अभविष्यत् इति सन्देहः अस्माकं मनसि उत्पद्येत। महात्मानः चरित्रं जीवने परमश्रेष्ठं भावयन्ति। ते प्राणान् त्यक्तुम् अपि सिद्धाः भवन्ति, किन्तु कदापि अपवादं न सहन्ते। एवं स्थिते अपवादनिवारणार्थं रामः सीतां परित्यक्तवान् इत्यत्र किम् आश्चर्यम्? रामेण सीता परित्यक्ता इत्यस्य तात्पर्यं रामः सीतायां प्रीतिमान् न आसीत् इति न। प्राणसमाम् अपि परित्यक्तवतः रामस्य परमोत्कृष्टतां प्रदर्शयति एषा घटना। हुं, सर्वं विधिविलसितम्" इति।

सीता यत्र वसति स्म तं कुटीरं, यं वृक्षं लक्ष्यीकृत्य लवकुशौ बाणप्रयोगं कुरुतः स्म तं वृक्षम्, अन्यानि स्थलानि च हनूमान् श्रद्धया दृष्टवान्। सीता यत्र सञ्चारं कृतवती तां भूमिं

४३. शत्रुशेषनिर्मूलनम्।



भक्त्या नमस्कृत्य मृत्तिकां ललाटे शिरसि च धृतवान्। अनन्तरम् आकाशमार्गेण आगत्य सः अयोध्यां प्राप्य राजभवनस्य पुरतः स्थिते उद्याने अवतीर्णः।

तत्र लवकुशौ धनुर्विद्यायाः अभ्यासं कुर्वन्तौ आस्ताम्। तयोः पुरतः बाणैः निर्मितम् एकस्तम्भात्मकं भवनम् आसीत्। अदृष्टपूर्वं हनूमन्तं दृष्ट्वा लवकुशौ नेत्रसङ्केतेन भावविनिमयं कृत्वा युगपत् बाणप्रयोगम् आरब्धवन्तौ। एवं बाणप्रयोगेण तौ हनूमन्तं परितः बाणैः वृतिं निर्मितवन्तौ।

"अये। मायाविन्! कः भवान्?" इति कोपमिश्रितेन स्वरेण पृष्टवान् लवः।

तौ महता आनन्देन कुतूहलेन च पश्यन् हनूमान् उक्तवान्– "अहं हनूमान्। रामं द्रष्टुम् आगतवान् अस्मि" इति।

"भवान् एव हनूमान् इत्यत्र कथं विश्वासः करणीयः? गदादीनां ग्रहणात् भासते यत् भवान् कश्चन मायावी स्यात् इति। मारीचस्य बन्धुः वा भवान्?" इति वदन् लवः धनुषि बाणं योजितवान्।

"यावत् भवान् आत्मनः आञ्जनेयत्वं न प्रमाणीकरोति तावत् इतः पदमात्रम् अपि चलितुं नार्हति" इति दृढस्वरेण उक्तवान् कुशः।

"हनूमान् प्रतापशाली इति श्रूयते। एवं तर्हि स्वप्रतापं प्रथमं प्रदर्शयतु, येन भवतः हनूमत्त्वम् अस्माभिः ज्ञायेत" इति उक्तवान् लवः।

हनूमान् पर्वताकारं प्राप्य लवकुशौ उन्नीय स्कन्धयोः उपवेश्य आकाशमार्गम् आश्रित्य अयोध्यां परितः सरयूं परितः च परिक्रमणं कृतवान्। ततः लवकुशौ अवतार्य नक्षत्रलोकं स्पृशन् विश्वरूपं दर्शितवान्, यच्च रूपं पूर्वं सीतायै दर्शितम् आसीत्। ततः पुच्छं दीर्घीकृत्य तेन दुर्गं निर्मितवान्। ततः लवकुशौ भुजयोः उपरि आरोप्य– "पूर्वं महिरावणसंहारानन्तरं मया रामलक्ष्मणौ एवम् एव आनीतौ" इति वदन् दुर्गभित्तेः उपरि सञ्चारं कृतवान्।

तदा लवः कुशश्च– "आञ्जनेयवर्य! भवतः प्रतापं द्रष्टुम् इच्छन्तौ आवां तथा

अभिनीतवन्तौ। आवयोः औद्धत्यं क्षाम्यतु कृपया" इति मन्दहासपूर्वकं वदन्तौ क्षमां प्रार्थितवन्तौ।

"भवतोः अपेक्षां जानन् अहमपि सर्वं दर्शितवान्" इति हनूमान् अपि हसन् उक्तवान्।

ततः लवः कुशश्च हनूमतः एकैकं हस्तं गृहीत्वा सन्तोषेण तं रामसमीपं नीतवन्तौ।

हनूमतः दर्शनात् रामस्य नेत्राभ्याम् अश्रूणि आगतानि। दुःखकारणतः अवरुद्धकण्ठः सः किमपि वक्तुं न शक्तवान्। तदा हनूमान् रामं विनयेन नमस्कृत्य– "प्रभो! पामरः इव भवान् अपि अश्रूणि स्रावयति खलु? किम् एतत्? राज्यपालनं नाम कण्टकाकीर्णः मार्गः इति भवान् जानाति एव। राज्ञा सर्वविधत्यागाः अपि करणीयाः भवन्ति। अन्यच्च वयं सर्वे दैवेच्छानुगुणं व्यवहरामः खलु? भवता यद्यत् क्रियते तत् महता उद्देशेन क्रियते। पामराः केचन भवतः व्यवहारस्य औचित्यम् अवगन्तुं न शक्नुयुः। किं तेन?" इत्येवं वदन् रामस्य सान्त्वनं कृतवान्।

तदा रामः दीर्घं निश्श्वस्य– "आञ्जनेय! भवतः दर्शनात्, वचनानां श्रवणात् च मम उद्वेगः किञ्चिदिव उपशान्तः। सीतावियोगाग्निः मां दहति। तत्रापि यदि यागविधिः निर्विघ्नं न परिसमाप्येत तर्हि मम जीवनं निष्फलं स्यात्। यागाश्वः इदानीं



मणिपुरदिशि गच्छन् अस्ति इति वार्ता श्रुता मया। इतः परम् अश्वरक्षणभारः भवतः उपरि निक्षिप्यते मया। अतः एव भवन्तम् अहम् आनायितवान्। मम त्रयः सहोदराः अश्वम् अनुसृत्य गताः सन्ति। भवान् तान् अनुसरतु" इति उक्तवान्।

एताम् आज्ञां शिरसा वहन् हनूमान् रामस्य अनुज्ञां प्राप्य गदां स्कन्धे आरोप्य ततः निर्गत्य आकाशमार्गम् आश्रितवान्।

हनूमान् यदा आकाशमार्गेण गच्छन् आसीत् तदा केकारण्ये केनचित् राक्षसेन सह उपविश्य सुरापानं कुर्वती विजयगानमग्ना नृत्यन्ती काचित् राक्षसी तेन दृष्टा। 'का एषा?' इति चिन्तयन् हनूमान् सूक्ष्मरूपं धृत्वा



समीपस्थस्य वृक्षस्य उपरि उपविष्टवान्। अल्पे एव काले तयोः सुरापानं, गानं, नृत्यं च समाप्तम्। तौ वृक्षस्य अधः उपविश्य वार्तालापे मग्नौ जातौ। हनूमान् जागरूकतया तयोः सम्भाषणं श्रुतवान्।

"शत्रुशेषः न स्यात् इति प्राज्ञाः वदन्ति। रामः एतत् न जानाति। शत्रुशेषभूतौ आवाम् अस्माकं सहोदराणाम् इच्छां पूरितवन्तौ। करालकण्ठ! तस्मिन् दिने भवान् रजकवेषं प्राप्य स्वकीयेन करालेन कण्ठेन बहु सम्यक् आक्रोशनं कृतवान्। गर्दभस्य कण्ठध्वनिम् अपि अतिशेते स्म भवतः ध्वनिः" इति उक्तवती राक्षसी।

"शूर्पणखे! भवती अपि तथैव। रजकपत्नी इव अभिनयन्त्या भवत्या सम्यक् एव व्यवहृतम्। भवत्याः व्यवहारं दृष्ट्वा पिशाची अपि लज्जाम् अनुभूतवती स्यात्" इति प्रशंसावचनानि उक्तवान् राक्षसः।

करालकण्ठः शतकण्ठस्य रावणस्य सहोदरः। रणरङ्गात् कथमपि आत्मानं संरक्ष्य सः प्रतीकारसाधनेच्छया अयोध्यां गत्वा रजकः इव व्यवहृतवान् आसीत्। रावणस्य सहोदरी शूर्पणखा जीवति स्म। कदाचित् काकतालीयन्यायेन सा अपि प्रतीकारसाधनार्थं रजकपत्नीवेषं प्राप्तवती आसीत्।

उभौ अपि बुभुक्षया पीडितौ सन्तौ मानवस्य ग्रहणार्थम् अयोध्यायाम् अटतः स्म। एवम् अटन्तौ तौ परस्परम् अभिमुखम् आगतवन्तौ। मानवरूपा शूर्पणखा हावभावादिभिः कटाक्षपातैः च करालकण्ठम् एकान्तप्रदेशं नीतवती। 'जनरहितप्रदेशः यदा प्राप्यते तदा एषा खादनीया' इति निश्चित्य मानवरूपः करालकण्ठः तस्याम् अनुरक्तिम् अभिनयन् ताम् अनुसृतवान् आसीत्।

जनरहिते प्रदेशे शूर्पणखा राक्षसरूपं प्राप्य तं खादितुं मुखम् उद्घाटितवती। 'भवती अपि राक्षसकुलीया वा?' इति पृच्छन् करालकण्ठः अपि राक्षसरूपं धृतवान्। अनन्तरं तौ परस्परं समालोच्य पुनरपि रजकदम्पतीवेषं धृत्वा जनसहिते मार्गे कलहम् अभिनीय रामं सम्यक्



निन्दित्वा अरण्यं प्रत्यागतवन्तौ आस्ताम्।

"सः हनूमान् पर्वते तिष्ठन् नासिकां गृहीत्वा तपः आचरति इति तु अस्माकं परमसौभाग्यम्" इति सन्तोषेण उक्तवान् करालकण्ठः।

"अये, तस्य हनूमतः नाम मा उच्चारयतु पुनः। तन्नामश्रवणात् मम कोपः वर्धते" इति उक्तवती शूर्पणखा।

"कोपः वर्धते उत भीतिः?" इति हसन् पृष्टवान् करालकण्ठः।

"अग्रजेन मदर्थं निर्मितं स्वर्णभवनं नाशितवान् अस्ति सः कपिः। कपिस्मरणात् दर्शनात् वा मम भीतिः कथं स्यात्? मम तु तस्मिन् उग्रः क्रोधः" इति वदन्ती शूर्पणखा लङ्कादहनं स्मरन्ती स्वपृष्टं मन्दं स्पृष्टवती।

लङ्कादहनसमये यदा भवनानि दग्धानि तदा अट्टाधारिकायाः पतनात् शूर्पणखायाः पृष्ठभागः दग्धः आसीत्। तद्वा उत्पन्नः किणः इहोऽपि स्फुटं दृश्यते स्म। तं किणं पश्यन् करालकण्ठः– "अहो, स च किणः इतोऽपि न अपगतः वा? अस्तु तावत्। स्वर्णभवनं नष्टं चेदपि भवनस्मारकः किणः तु अस्ति एव" इति हसन् उक्तवान्।

"हूँ। अलम् उपहासेन। प्राचीनम् अपमानस्मृतिं मा उद्बोधयतु। सः दुष्टः हनूमान् एव एतस्य सर्वस्य कारणम्" इति उक्तवती शूर्पणखा।

"सत्यम् एतत्। तस्य दुष्टस्य स्मरणं मयि अपि कोपं जनयति। लङ्कानाशस्य हेतुः सः एव" इति उक्तवान् करालकण्ठः।

"किम् इदानीं कोपप्रदर्शनेन? रणरङ्गे तु तं मारयितुं न शक्तवान् भवान्। प्रत्युत ततः प्रहारं प्राप्य रणरङ्गात् पलाय्य आगतवान्। अपूर्वा प्रतीकाररीतिः भवतः" इति उक्तवती शूर्पणखा।

"तदानीं पलायितवान् स्याम्। किन्तु प्रतीकारः इदानीं साधितः एव। अन्यच्च तदानीम् अहं पलायितः इत्यतः इदानीं सुन्दरी राक्षसी भवती प्राप्ता मया" इति उक्तवान् करालकण्ठः।

"इतः परम् आवाम् इतः सुदूरं प्रदेशं गत्वा सुखेन जीवनं यापयाव" इति उक्तवती



शूर्पणखा।

"तथा गमनात् पूर्वम् अन्यत् कार्यं करणीयम् अस्ति। रामस्य यागाश्वः ग्रहणीयः आवाभ्याम्" इति उक्तवान् करालकण्ठः।

"अहो, उत्तमा सूचना। तम् अश्वं गृहीत्वा तस्य उपरि उपविश्य प्रयाणं करवाव" इति उक्तवती शूर्पणखा।

"प्रथमं ग्रहणम्। अनन्तरं प्रयाणस्य विचारः" इति उक्तवान् करालकण्ठः।

"अये, अलम् अविवेकेन। अहं यत् वदामि तत् भवेत् एव। यदि भवान् विरोधं कुर्यात् तर्हि घोरः परिणामः सम्मुखीकरणीयः भवेत् भवता। तस्य वराकस्य लक्ष्मणस्य कारणतः मम नासिका कर्णौ च नष्टाः स्युः नाम। किन्तु मम नखानाम् उग्रता तु तीक्ष्णा अस्ति एव। अतः अनालोच्य किमपि मा वदतु भवान्" इति उक्तवती शूर्पणखा।

"स च अश्वः मारणीयः आवाभ्याम्" इति उक्तवान् करालकण्ठः।

"किमर्थं मारणीयः सः? तेन किं वा अपकृतम्?" इति पृष्टवती शूर्पणखा।

"अश्वेन किमपि न अपकृतम्। किन्तु रामेण बहुधा पीडा दत्ता खलु? तदर्थम् एषः क्रमः। यागाश्वः नष्टः चेत् रामस्य यागः अपूर्णः भविष्यति। सीतावियोगतप्तः रामः एतया घटनया मृतप्रायः भवेत्। अतः अश्वः मारणीयः इति उक्तं मया" इति उक्तवान् करालकण्ठः।

"एवं वा? तर्हि अश्वम् अवश्यं मारयाम। अश्वस्य शिरसः मांसं परमरुचिकरम् इति श्रुतं मया" इति उक्तवती शूर्पणखा।

"सदा खादनचिन्ता एव भवत्याः" इति वदन् ततः उत्थितवान् करालकण्ठः।

तदा हनूमान् वृक्षस्य शाखां कर्तयित्वा तयोः उपरि पातितवान्।

"अस्माकं पितरः आवयोः योजनां श्रुत्वा पुष्पवृष्टिं कुर्वन्तः सन्ति इति भाति" इति उक्तवती शूर्पणखा।

"न पुष्पाणि पतितानि मूर्खे! पर्णानि पतन्ति सन्ति" इति उक्तवान् करालकण्ठः।

"पुष्पवृष्टिः वा पर्णवृष्टिः वा, किं तेन? कार्यसिद्धये शीघ्रं गच्छाव तावत्" इति

वदन्ती शूर्पणखा करालकण्ठस्य हस्तं गृहीतवती।

उभौ अपि यदा ततः प्रस्थितवन्तौ तदा हनूमान् स्वस्य पुच्छं दीर्घीकृत्य तयोः पुरतः पातितवान्। "अहो महासर्पः!" इति भीत्या उक्तवान् करालकण्ठः।

शूर्पणखा पुच्छं परीक्ष्यादृष्ट्वा– "मूर्ख! हनूमतः पुच्छम् एतत्। आवयोः वधार्थं प्रेषितः यमपाशः एषः" इति भीत्या वदन्ती आक्रन्दनं कृतवती शूर्पणखा।

"अये अविवेकिनि! भवत्याः भ्रान्तिः। हनूमान् दूरे कुत्रापि तपः कुर्वन् अस्ति। तस्य अत्र उपस्थितिः कथं भवेत्? व्यर्थः भ्रमः भवत्याः" इति उक्तवान् करालकण्ठः।

"अहं तत् पुच्छं सम्यक् स्मरामि। लङ्कादाहस्य कारणम् एतत् एव पुच्छम्" इति उक्तवती कम्पमाना शूर्पणखा।

एतत् श्रुत्वा करालकण्ठः ततः पलायनार्थम् उद्युक्तः। "अये भीरो, माम् अत्रैव परित्यज्य गन्तुम् इच्छसि वा भवान्?" इति वदन्ती शूर्पणखा करालकण्ठस्य हस्तं दृढं गृहीतवती।

वृक्षात् अवतीर्णः हनूमान् घोरं रूपं धृत्वा तयोः पुरतः प्रत्यक्षः अभवत्। तदा तौ राक्षसौ कीचुकुर्वन्तौ ततः धावितुम् उद्युक्तौ। एतेन क्रुद्धः हनूमान् पार्श्वस्थं पर्वतशिखरम् उन्नीय तयोः उपरि पातितवान्। पर्वतस्य अधः स्थितौ तौ तत्रैव प्राणैः वियुक्तौ जातौ।

एवं शत्रुशेषस्य निर्मूलनात् सन्तुष्टः हनूमान् सिंहगर्जनेन अरण्ये प्रतिध्वनिम् उत्पादयन् आकाशमार्गम् आश्रित्य मणिपुरम् उद्दिश्य निर्गतवान्।

हनूमान् आकाशमार्गेण गच्छन् वनानि, पर्वतान् च अतिक्रम्य, गङ्गानदीं चापि अतिक्रम्य मणिपुरराज्यपरिसरं प्राप्तवान्।

तावता मणिपुरस्य राजधान्याः परिसरे आकाशे काचित् विद्युत्सदृशी कान्तिः महाध्वनिम् उत्पाद्य वेगेन गच्छन्ती हनूमता दृष्टा। हनूमान् अपि विद्युद्वेगम् आश्रित्य तां कान्तिम् अनुसृतवान्।





# वनदेवतानुग्रहः

रामनाथस्य पिता दिवङ्गतः। पितुः मरणानन्तरं रामनाथः वाणिज्यम् आरब्धवान्। वाणिज्ये रामनाथस्य अनुभवः न आसीत् इत्यतः सः वाणिज्ये महतीं हानिं प्राप्तवान्। तत्कारणतः ऋणम् अपि कृतवान् सः। ऋणात् मुक्तः भवितुम् इच्छन् रामनाथः पित्रार्जितं गृहं विक्रीय पत्नीपुत्रैः सह पत्न्याः मातृग्रामं गतवान्।

तस्मिन् ग्रामे रामनाथस्य पत्न्यै तस्याः पितामह्या दत्तं मृच्छदेन निर्मितं गृहम् आसीत्। रामनाथः तस्य पत्नी च तस्मिन् गृहे वासं कृतवन्तौ। अनन्तरं रामनाथस्य चिन्ता उत्पन्ना यत्– अग्रे जीवननिर्वहणार्थं किं करणीयम्? इति।

रामनाथस्य पत्नी चण्डी, कोपस्वभावा च। सा जीवननिर्वहणं महतीं समस्यां चिन्तयन्तम् उपविष्टं पतिं दृष्ट्वा कोपेन– "किमर्थम् एतावती चिन्ता? अरण्यं गत्वा काष्ठानि आनयतु। काष्ठानां विक्रयणेन जीवनं यापयितुं शक्यते। एतत् सर्वं मया बोधनीयं वा?" इति पृष्टवती।

रामनाथः पत्न्याः वचनं श्रुत्वा परशुं स्वीकृत्य 'किं करोमि? एतत् सर्वं मम ललाटलिखितम्। कस्यचित् वृक्षस्य छेदनं करोमि। वृक्षः यदा शुष्कः भवति तदा ततः काष्ठानि सङ्गृह्य नगरे तानि विक्रेतुं शक्नोमि' इति चिन्तयन् अरण्यं गतवान्। परशुना वृक्षस्य छेदनार्थम् उद्युक्तः च।

अपरक्षणे एव– "रामनाथ! तिष्ठतु" इति वदन्तीं हरितवर्णशाटिकाधारिणीं काञ्चित् महिलां दृष्टवान् रामनाथः।

रामनाथः क्षणकालं यावत् दिग्भ्रान्तः। अपरक्षणे एव आत्मानं निगृह्य तां महिलां नमस्कृत्य किमपि वक्तुम् उद्युक्तः। तावति



काले सा एव रामनाथं पृष्टवती– "रामनाथ! किमिदम् अकार्यं भवतः? वनदेव्याः छेदनं भवतः मनः कथम् अङ्गीकरोति?" इति।

तदा रामनाथः उक्तवान्– "अम्ब! भवती मम दारिद्र्यविषयम् जानाति इति चिन्तयामि। अतः अद्य आरभ्य काष्ठानां विक्रयणेन धनं सम्पाद्य मम कुटुम्बपोषणं करोमि इति चिन्तितवान् अस्मि" इति।

रामनाथस्य वचनं श्रुत्वा सा महिला उक्तवती– "अहं वनदेवी अस्मि। अहं भवतः साहाय्यं करोमि" इति वदन्ती हस्तेन शब्दं कृतवती। अपरक्षणे एव काचन श्वेतधेनुः तत्र आगता।

पुनः वनदेवी– "एतां धेनुं भवान् गृहं नयतु। भवान् वा भवतः पत्नी वा यावत् इच्छति तावत् क्षीरं दास्यति एषा धेनुः। इतः परं वृक्षम् मा कर्तयतु" इति रामनाथम् उक्त्वा अदृश्या जाता।

एतेन रामनाथः अतीव सन्तुष्टः। परशुं स्कन्धे आरोप्य धेन्वा सह सः गृहं गतवान्।

पत्युः आगमनम् एव प्रतीक्षमाणा आसीत् तस्य पत्नी मन्दाकिनी। यदा पतिः गृहसमीपम् आगतवान् तदा पत्नी कोपेन– "किं रिक्तहस्तः आगच्छन् अस्ति भवान्? कुत्र काष्ठानि?" इति पृष्टवती।

तदा रामनाथः– "मन्दाकिनि! काष्ठानि किमर्थम्? कामधेनुसदृशी धेनुः आनीता मया। पश्यतु" इति वदन् वने प्रवृत्तं सर्वं पत्नीम् उक्तवान्।

पत्युः वचने विश्वासः न उत्पन्नः मन्दाकिन्याः। अतः सा एकं घटम् आनीय दोहनम् आरब्धवती। घटः क्षीरेण पूर्णः। तथापि धेनुः क्षीरं ददती एव अस्ति। एतेन मन्दाकिनी सन्तुष्टा। अनन्तरं रामनाथः क्षीरं स्वीकृत्य नगरं गतवान्। तत्र विक्रयणं कृत्वा तेन धनेन गृहार्थम् आवश्यकानि वस्तूनि आनीतवान्।

एवमेव सप्ताहः अतीतः। एकस्मिन् प्रातःकाले मन्दाकिनी कोपेन पतिम् उक्तवती– "दोहनं कृत्वा कृत्वा श्रान्तौ मम हस्तौ। एतां धेनुं स्वीकृत्य पुनः वनं गच्छतु। वनदेव्यै एतां दत्त्वा अन्यत् किमपि उत्तमं

वस्तु आनयतु, येन अस्माकं कष्टं न स्यात्। सा अन्यत् न ददाति चेत् पुनः वृक्षच्छेदनं करोमि इति तां भाययतु'' इति।

रामनाथः पत्न्याः वचनानुसारं धेन्वा सह अरण्यं गतवान्। कस्यचित् वृक्षस्य च्छेदने उद्युक्तः च। तदा वनदेवी पुनः प्रत्यक्षा भूत्वा पृष्टवती– ''रामनाथ! पुनः किमर्थं मूर्खताम् आचरति भवान्?'' इति।

तदा रामनाथः– ''किं करोमि अम्ब! 'दोहनं कर्तुं मया न शक्यते' इति वदति मम पत्नी'' इति उक्तवान्।

रामनाथस्य वचनं श्रुत्वा वनदेवी करताडनपूर्वकं शब्दं कृतवती। अपरक्षणे एव तत्रत्या श्वेतधेनुः अदृश्या जाता। तस्मिन् स्थाने काचित् कृष्णवर्णीया कारण्डवी दृष्टा। वनदेवी रामनाथम्– ''एतां कारण्डवीं नयतु। अण्डं ददातु इति भवान् वदति चेत् एषा यथेष्टम् अण्डानि दास्यति'' इति उक्त्वा अदृश्या जाता।

रामनाथः कारण्डवीं स्वीकृत्य गृहं गतवान्। अरण्ये प्रवृत्तं सर्वं ज्ञात्वा मन्दाकिनी महता सन्तोषेण– ''हे कारण्डवि! अण्डानि ददातु'' इति उक्तवती।

अनुक्षणं कारण्डवी एकस्य अनन्तरम् एकम् इति बहूनि अण्डानि दत्तवती। रामनाथः अण्डानि नगरं नीत्वा विक्रीय आगतवान्। एवम् अण्डानां विक्रयणेन रामनाथस्य जीवनं निरातङ्कं प्रचलति स्म।

दश दिनानि अतीतानि। एकस्मिन् दिने मन्दाकिनी पतिम् उक्तवती– ''प्रतिदिनम्





एतां कारण्डवीम् 'अण्डानि ददातु, अण्डानि ददातु' इति उक्त्वा उक्त्वा श्रान्ता अहम्। मम कण्ठध्वनिः एव नष्टः। अतः एतां कारण्डवीं वनदेव्यै दत्त्वा इतोऽपि उत्तमम् उपयोगयोग्यं किमपि आनयतु। परशुं नेतुं मा विस्मरतु। यदि सा न ददाति तर्हि वृक्षस्य छेदनं करोमि इति वदन् तां भाययतु" इति।

अनन्तरदिने रामनाथः कारण्डवीं स्वीकृत्य अरण्यं गतवान्। वृक्षं छेत्तुम् उद्युक्तः च। तदा वनदेवी प्रत्यक्षा भूत्वा– "रामनाथ! कीदृशी मूर्खता भवतः? किमर्थम् एवम् आचरति भवान्?" इति पृष्टवती।

तदा रामनाथः पत्न्या उक्तं सर्वं वनदेवीं निवेदितवान्। इदानीं वनदेवी पुनः करताडनेन शब्दं कृतवती। तदा कारण्डव्याः स्थाने एकः मृद्घटः दृष्टिगोचरः जातः।

"रामनाथ! इदानीं भवते अक्षयपात्रम् एव यच्छन्ती अस्मि। भवान् वा भवतः पत्नी वा यम् आहारं प्रार्थयतः तं ददाति एतत् पात्रम्। इतः परं वा वृक्षान् मा कर्तयतु। सुखेन जीवतु भवान्" इत्युक्त्वा अदृश्या जाता वनदेवी। अक्षयपात्रं स्वीकृत्य गृहं गतवान् रामनाथः।

अक्षयपात्रं दृष्टवत्याः मन्दाकिन्याः महान् सन्तोषः। तौ स्वगृहम् एव भोजनालयरूपेण परिवर्तितवन्तौ।

पञ्चदशदिनाभ्यन्तरे एव एतस्मिन् कार्ये जामिता उत्पन्ना मन्दाकिन्याः। सा पतिं रामनाथं कोपेन उक्तवती– "यदा जनाः आगच्छन्ति तदा भोजनं दातव्यम्। पुनः पत्रादीनि अपनीय भोजनशाला गोमयेन उपलेपनीया। एतादृशकार्याणां निश्चितसमयः तु नास्ति एव। धिक् एतादृशकार्यम्! सा वनदेवता भवन्तं विनोदसाधनं भावितवती अस्ति। श्वः अहम् एव भवता सह वनम् आगमिष्यामि। एतत् मृत्पात्रं तस्याः पादमूले क्षिप्त्वा अपूर्वं किमपि प्राप्स्यामि। पश्यतु, मम सामर्थ्यम्" इति।

अनन्तरदिने मन्दाकिनी अक्षयपात्रं स्वीकृत्य पत्या सह अरण्यं गतवती। पतिं वृक्षच्छेदनं करोतु इति आदिष्टवती। रामनाथः वृक्षच्छेदनार्थम् उद्युक्तः।

तदा वनदेवता प्रत्यक्षीभूय– "अये मूर्ख!

अक्षयपात्रं प्राप्य अपि अतृप्तिः वा भवतः? एतत्सन्दर्भे पत्नी अपि अत्र आनीता भवता'' इति उक्तवती।

तदा मन्दाकिनी अग्रे आगत्य– ''अये, एतादृशं मृत्पात्रं मम पत्ये किमर्थं दत्तम्? मूर्खः मम पतिः अविचार्य भवत्या दत्तं स्वीकरोति। अतः अत्र आगतं मया एव। यदि भवती गोणीमितं सुवर्णं दद्यात् तर्हि वयम् अत्र पुनः न आगच्छेम। किम् एतादृशैः क्षुद्रैः मृत्पात्रादिभिः? किं वयं भिक्षुकाः?'' इति वदन्ती अक्षयपात्रं बलात् भूमौ पातितवती।

एतत् दृष्ट्वा वनदेवी अनुकम्पामिश्रितेन स्वरेण– ''भवत्या घटः न भञ्जितः, प्रत्युत स्वभाग्यम् एव भञ्जितम्। मया यत् दत्तं तत् प्रत्यर्पितं चेदेव अहम् अन्यत् दातुं शक्नुयाम्। अन्यथा न'' इति उक्तवती।

तदा मन्दाकिनी कोपामिश्रितया दृष्ट्या पतिं पश्यन्ती– ''किं रे, असहायः इव मौनं स्थितवान् भवान्? हुं, कर्तयतु वृक्षान्। अरण्यम् एव नाशयाम वयम्'' इति उक्तवती।

पत्न्याः वचनं तिरस्कर्तुम् अशक्नुवन् रामनाथः वृक्षच्छेदनार्थम् उद्युक्तः। ''एतस्मिन् अरण्ये एकम् अपि वृक्षं च्छेत्तुं न शक्नोति भवान्'' इति रामनाथम् उक्त्वा वनदेवता अदृश्यतां गतवती।

अनन्तरक्षणे एव रामनाथस्य हस्तात् परशुः पतितः। तदीयौ हस्तौ शक्तिहीनौ जातौ।

पत्युः एतादृशीं दुर्गतिं दृष्ट्वा मन्दाकिनी



अश्रूणि स्रावयन्ती– "अस्मान् क्षाम्यतु अम्ब! एतादृशं कठोरं दण्डं मा विदधातु कृपया" इति अदृश्यतां गतां वनदेवताम् उद्दिश्य वदन्ती रोदनं कृतवती।

वनदेवता पुनः दृष्टिगोचरा न जाता। अनन्यगतिकौ रामनाथः मन्दाकिनी च गृहं प्रत्यागतवन्तौ। वनदेवता कदाचित् वा कृपां प्रदर्शयेत् इति मन्दाकिन्याः आशा। अतः सा प्रतिदिनं वनं गत्वा वनदेवताम् उद्दिश्य बहुविधप्रार्थनां करोति। सायं प्रत्यागमनसमये अरण्ये लब्धानि फल-कन्दादीनि गृहम् आनयति। तेषां विक्रयणतः यत् धनं प्राप्यते तदेव तस्याः कुटुम्बस्य आधारः जातः।

दिनानि गतानि। मन्दाकिनी स्वगृहं परितः स्थिते स्थले फलदायकानि सस्यानि आरोपितवती। शाकोद्यानम् अपि सज्जीकृतं तया। एवं पञ्चवर्षाभ्यन्तरे तस्याः आयः प्रवृद्धः। शाकाः च शीघ्रम् एव धनमूलं जाताः। वृक्षाः अपि फलदानयोग्याः जाताः।

कदाचित् मन्दाकिनी स्वगृहं परितः स्थितायाः वाटिकातः लब्धानि आम्रफल-तिन्त्रिणीप्रभृतीनि शाकादीनि च शकटे आरोप्य नगरं गतवती। तेषां विक्रयणतः सहस्रं रूप्यकाणि प्राप्य गृहम् आगतवती।

धनस्यूतं पत्ये प्रदर्शयन्ती सा– "वस्तुतः वनदेवता अस्मासु विवेकं जनितवती ः 'जीवननिर्वहणार्थं वृक्षच्छेदनम् एव करणीयं नास्ति। अन्यविधेन अपि तृप्त्या जीवनं निर्वोढुं शक्यते' इति नीतिं बोधितवती सा। अस्माकम् अज्ञानं दूरीकृतवती" इति सन्तोषेण उक्तवती।

विवेकयुक्तेन तस्याः एतेन वचनेन वनदेवता सन्तुष्टा इति भाति। अतः रामनाथस्य हस्तौ यथापूर्वं जातौ।

धनग्रन्थेः स्वीकरणार्थं हस्तं प्रसारितवन्तं पतिं दृष्ट्वा सा आनन्दातिरेकेण अश्रूणि स्रावयन्ती– "सर्वम् एतत् वनदेवतायाः अनुग्रहात् सम्पन्नम्" इति वदन्ती हस्तौ उन्नीय वनदेवतां नमस्कृतवती।



## त्रिवर्षीया बुद्धिमती



# र स वा र्ताः

उत्तरप्रदेशस्य देहरादून् रायवालान् प्रदेशीया मीनाक्षीनामिका सुन्दरी बालिका यद्यपि त्रिवर्षीया, तथापि सुलभतया दिनपत्रिकाः पठति। सुन्दरैः अक्षरैः वाक्यानि लिखति। विना क्लेशं गणनं करोति। मीनाक्ष्याः बुद्धिमत्तया तस्याः मातापितरौ महान्तम् आनन्दम् अनुभवतः। मीनाक्ष्याः पिता हवीलदार् पात्रा, माता च मञ्जूषा। तौ पुत्रीं शालां प्रेषयितुम् इष्टवन्तौ। किन्तु मीनाक्ष्याः पञ्च वर्षाणि न अभवन् इति कारणतः शालाप्रवेशार्थं न अङ्गीकृतवन्तः शालायाः अधिकारिणः। एतेन मीनाक्ष्याः मातापितरौ अतीव खिन्नौ। तौ गृहे एव मीनाक्षीम् पठनादिकं बोधितवन्तौ। मीनाक्ष्याः मातापित्रोः अध्ययनं दशमकक्ष्यापर्यन्तम् अभवत्। यैः अधिकम् अधीतं तैः यदि मीनाक्षी पाठ्यते तर्हि तस्याः अध्ययने अधिकं प्रयोजनं भवति इति तस्याः मातापित्रोः आशयः।

## प्राणरक्षणार्थं मांसभक्षणम्

बनाव् अकाम्पानामकः चतुर्दशवर्षीयः बालकः मेक्सिकोप्रदेशीयः। सः विद्युदाघातेन वा तडितः आघातेन वा तीव्रं व्रणितः। समग्रं शरीरं दग्धम्। कस्मिंश्चित् स्थले पतितः आसीत् सः। कानिचन दिनानि एतत् अन्यैः न ज्ञातम्। ततः तस्य निष्कासनपर्यन्तं कानिचन दिनानि सः दग्धस्य दक्षिणहस्तस्य मांसं खादन् प्राणरक्षणं कृतवान् इति श्रूयते।

## अग्निना क्रीडा

पञ्चवर्षीयः आस्पिन् मेल्नर् अमेरिकादेशस्य ओहियो मोरेयुनाप्रदेशीयः। दूरदर्शनस्य धारावाहिनीदर्शनं तस्य प्रियं कार्यम्। तत्र चित्रे द्वौ बालौ सर्वेषां वस्तूनाम् अग्निस्पर्शं कुरुतः स्म। एतत् दृष्ट्वा आस्पिन् मेल्नर् अपि आनन्देन एकाम् अग्निपेटिकां सम्पाद्य शलाकाभिः अग्निं ज्वालयन् सन्तोषम् अनुभवति स्म। 'अग्निविषये जागरूकतया भवितव्यम्। अग्निशलाकाभिः क्रीडा न उचिता' इति बहुवारं बोधितवती तस्य माता। तथापि आस्पिन् अग्निना क्रीडां न परित्यक्तवान्। कदाचित् आस्पिन् अग्निशलाकाभिः क्रीडन् आसीत्। तस्मिन् समये तस्य पार्श्वे एव स्थितायाः तस्य अनुजायाः अग्निस्पर्शः अकस्मात् जातः। तेन तस्य अनुजा मृता।

## आरक्षकशुनकेन शिशुः रक्षितः

सद्यः एव महाराष्ट्रस्य मङ्गरुळनामके ग्रामे यः भूकम्पः जातः,तदा तत्र अष्टादशमासीया काचित् बालिका शिलानाम् मध्ये पतिता। दिनचतुष्टयं यावत् सः शिशुः तथैव आसीत् शिलानां मध्ये। फ्रान्सदेशीयं रक्षकदलं आरक्षकशुनकेन सह तं ग्रामं प्रति आगतम्। आरक्षकशुनकः नासिकया गन्धम् आघ्राय शिलानाम् अधः मनुष्यः अस्ति इति सूचितवान्। तत्क्षणं रक्षकदलं कार्यप्रवृत्तं जातम्। शिलाः निष्कास्य सावधानं शिशुं बहिः आनीय शिशुं रक्षितवन्तः आरक्षकाः।





# विधिविलसितम्

आञ्जनेयः कस्यचित् कृषिकस्य गृहे वसन् गोचारणकार्यं करोति स्म। प्रातः उत्थाय स्वामिना स्वामिन्या च उक्तानि कार्याणि कृत्वा किञ्चित् भुक्त्वा धेनूः तृणमयं प्रदेशं नयति स्म।

ग्रामात् बहिः एका वाटिका आसीत्। योग्यस्य पालकस्य अभावात् दुःस्थितिं गतायां तस्यां वाटिकायां तृणानि समीचीनतया वर्धितानि आसन्। अतः बहवः गोपालकाः बालाः धेनूः अत्रैव आनयन्ति स्म।

कदाचित् आञ्जनेयः धेनुभिः सह एतां वाटिकाम् आगतवान्। तच्च उत्सवदिनम्। अतः अन्ये बालकाः धेनूः न आनीतवन्तः एव। आञ्जनेयः तु उत्सवविषयम् अजानन् आगतवान् आसीत्। एकाकितया उपवेशनं तस्मिन् नीरसताम् अजनयत्। सः विना कारणं धेनूः इतस्ततः धावयन् किञ्चित्कालं यापितवान्।

तावता कश्चन भ्रमरः शब्दं कुर्वन् तस्य समीपम् आगतः। कार्यरहितः आञ्जनेयः तं भ्रमरं कोपेन मारितवान् एव। तावता अपि तस्य कोपः न शान्तः। सः मृतं भ्रमरं पुनः उन्नीय द्विधा विभज्य क्षिप्तवान्। एवं तेन क्षिप्तौ भागौ कस्यचित् मृद्राशेः उपरि पतितवन्तौ। क्षणमात्रेण भ्रमरः जीवं प्राप्य उड्डीय आगच्छत्।

आञ्जनेयः आश्चर्यम् अनुभवन् तत् स्थलं गत्वा परीक्षितवान्। लता-गुल्मादिभिः तत् स्थलम् आवृतम् आसीत्। मृद्राशेः उपरि पर्णानि पतितानि आसन्। किन्तु हरिद्वर्णेन युक्तानि तानि सजीवानि इव एव आसन्। एतेषां पर्णानां कारणतः एव भ्रमरः मृतोऽपि उज्जीवितः जातः इति चिन्तितवान् आञ्जनेयः। सः सञ्जीवनीसस्यस्य विषये

श्रुतवान् आसीत्। तदेव सस्यं स्यात् एतत् इति आलोच्य तत् स्थलं सम्यक् परिशील्य मनसि चिह्नितवान्।

घटना प्रत्यक्षं दृष्टवतः अपि आञ्जनेयस्य पुनः सन्देहः एतत् सस्यं सञ्जीविनी एव स्यात् वा न वा इति। 'मया यदा मृतः भ्रमरः क्षिप्तः तदा एव काकतालीयन्यायेन अन्यः भ्रमरः ततः उड्डीय गतः अपि स्यात्। अतः पुनः परीक्ष्य ज्ञातव्यम्' इति निश्चित्य आञ्जनेयः उद्याने अन्विष्य मृतम् एकं शलभम् आनीय तस्य सस्यस्य उपरि स्थापितवान्। अपरक्षणे एव स च शलभः जीवं प्राप्य झटिति उड्डीय कुत्रापि अगच्छत्।



एतया घटनया आञ्जनेयः निश्चितवान् यत् एतत् सञ्जीविनीसस्यम् एव इति। 'एतस्य स्पर्शात् यः कोऽपि जीवी उज्जीवनं प्राप्तुम् अर्हति' इति जानन् सः– 'एतां वार्तां मित्राणि वदामि चेत् सर्वे माम् आश्चर्येण पश्यन्ति। अहं तेषां सम्भाषणविषयत्वं प्राप्नोमि' इति चिन्तितवान्।

अनन्तरदिने धेनूः चारयन् मित्रैः सह आगच्छन् आञ्जनेयः जीर्णोद्याने प्रवृत्तं विस्तरेण सर्वम् उक्तवान्। एतत् श्रुत्वा अन्ये बालकाः– "मिथ्याकथक! अतिशयोक्त्या अस्मान् मूढान् कर्तुम् इच्छति वा भवान्?" इत्येवं वदन्तः आञ्जनेयम् उपहसितवन्तः। उपहासवचनैः कुपितः आञ्जनेयः निश्चितवान् यत् इतःपरम् एतं विषयं कमपि न वदामि एव इति।

कानिचन दिनानि अतीतानि। कदाचित् प्रातःकाले तस्य ग्रामस्य ज्येष्ठः कश्चन दिवं गतः। मृतः सः ज्येष्ठः न केवलं धनिकः, अपि तु गुणवान् अपि आसीत्। दानशीलः आसीत्। देवालयादिभ्यः सः प्रभूतं धनं दत्तवान् आसीत्। विना धनस्वीकरणं बहूनां विवाहं निर्वर्तितवान् आसीत्। गृहनिर्माणार्थं निर्धनानां साहाय्यं करोति स्म सः। एतादृशैः कारणैः ग्रामीणाः सर्वे तं देवं भावयन्ति स्म।

रोगकारणतः मासं यावत् शय्याम् आश्रितः सः परलोकं गतवान् आसीत्। वैद्याः तस्य प्राणानां रक्षणार्थं बहुविधाः चिकित्साः कृत्वा अपि असफलाः जाताः आसन्।

एतस्य ज्येष्ठस्य मरणवार्तां श्रुत्वा ग्रामीणाः सर्वे तस्य गृहस्य पुरतः सम्मिलिताः। ते सर्वे मृतस्य गुणानां प्रशंसां कुर्वन्तः आसन्। 'सर्वं विधिविलसितम्' इति वदन्तः आसन् केचन। 'वैद्यः चिकित्सां कृत्वा औषधं दद्यात् नाम। किन्तु जीवनं तु दातुं न अर्हति सः' इति वदन्तः आसन् पुनः केचन।

एतत् वचनम् आञ्जनेयेन अपि श्रुतम्। धेनुभिः सह गच्छन् एतत् श्रुतवान् आसीत् सः। प्रवृत्तं सर्वं ज्ञात्वा सः– "मृतानाम् उज्जीवनार्थम् उपायम् अहं जानामि। जीर्णोद्याने सञ्जीविनीसस्यम् अस्ति। तस्य उपयोगतः मृताः अपि उज्जीविताः भवन्ति" इति तत्र सम्मिलितान् जनान् उद्दिश्य उक्त्वा स्वस्य अनुभवं विस्तरेण निवेदितवान्।

बहवः तस्य वचनेषु न विश्वसितवन्तः। किन्तु द्वित्राः 'एतस्य वचनस्य सत्यतां पश्याम तावत्' इति वदन्तः आञ्जनेयम् अनुसरन्तः जीर्णोद्यानं गतवन्तः।

सञ्जीविनीसस्यं यत्र अस्ति तत् स्थलम् आञ्जनेयः सम्यक् स्मरति। प्रतिदिनं सः तस्य स्थलस्य समीपे स्थित्वा तत् स्थलं सकृत् पश्यति स्म एव। अतः सः तान् सर्वान् तस्य स्थलस्य समीपं नीतवान्। किन्तु आश्चर्यं नाम तस्मिन् स्थले पर्णैः शोभमाना सा लता न आसीत्। आञ्जनेयः तु नितराम् आश्चर्यचकितः सन् समीपस्थेषु स्थलेषु अपि अन्वेषणं कृतवान्। तस्य एतादृशं व्यवहारं दृष्ट्वा ग्रामीणाः क्रुद्धाः। 'अविवेकिन्!' 'मूर्ख!' 'मिथ्यावादिन्' इति ग्रामीणाः तं बहुधा तर्जितवन्तः। अपमानेन असहायकतया च आञ्जनेयः नितरां लज्जितः अभवत्।

वस्तुतः तु येषाम् आयुः समाप्तं तेषाम् उज्जीवनस्य आवश्यकता नास्ति खलु लोके? अकालमरणं प्राप्तवताम् उज्जीवनम् आवश्यकं भवति। अतः अकालमरणसन्दर्भे एव सञ्जीविनीसस्यं दृष्टिगोचरं भवति, अन्यसमये न। एतत् अजानन् आञ्जनेयः अपमानितः जातः।



# प्रकृतिवैचित्र्याणि

## सर्पाः मन्दं चरन्ति




सर्पाः वेगेन गच्छन्ति इति वयं चिन्तयामः चेत् सा काचित् भ्रान्तिः एव। वस्तुतः सर्पाः मन्दं सर्पन्ति। केषुचित् सन्दर्भेषु, तत्रापि प्रधानतया आहारस्य सङ्ग्रहणार्थं यदा उद्युक्ताः भवन्ति तदा वेगेन सर्पन्ति सर्पाः। भुवासिषु सर्पेषु कृष्णसर्पः प्रतिघण्टं दश–'मैल्'-वेगेन सर्पति। सर्वेषां सर्पाणाम् अपेक्षया वेगगामिनः एते कृष्णसर्पाः।

## आलुकानि अङ्कुरितानि भवन्ति




प्रवृद्धम् आलुकं बहुदिनपर्यन्तम् एकत्र स्थाप्यते चेत् आलुकस्य लघुलघुरन्ध्रेषु अङ्कुराणि उत्पद्यन्ते। तानि अङ्कुराणि स्वस्य जीवनार्थम् अत्यावश्यकम् आहारम् आलुकस्य अन्तर्भागतः प्राप्नुवन्ति इत्यतः तेषाम् अङ्कुराणां वर्धनं निरातङ्कं भवति।

## शृगालमुखी जतुका

जतुकाः आकारेण अल्पाः। एतासां शिरः मूषकाणां शिरः इव अल्पाकारकम्। किन्तु जातिभेदविशेषे जातायाः जतुकायाः शिरः शृगालस्य इव भवति। अतः एतां केचन "डयमाना शृगाली" इति वदन्ति।




एताः जतुकाः लघुशुनकाकारिकाः भवन्ति। एतासां पक्षयोः दैर्घ्यं ६ द्वादशाङ्गुलमितम्। सामान्यतः जतुकाः शब्दम् अनुसृत्य गच्छन्ति। किन्तु एतासां जतुकानां दृष्टिशक्तिः तु उत्तमा भवति। अतः दृष्टिशक्तिबलात् एव एताः सञ्चारं कर्तुं शक्नुवन्ति। एतादृश्यः जतुकाः अस्माकं देशे तत्र तत्र दृश्यन्ते।


Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!



It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.

From all of us here at Chandamama, have a great year in school. And remember to tell us what you've learnt everyday, when you come home from school !

THE
HANDAMAMA
OLLECTION

ARTIG1246

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकाम् एप्रिल्-९४ मासे प्रकटयिष्यामः।



S.G. SESHAGIRI



S.G. SESHAGIRI

*उपरितन चित्रद्वय पश्यन्तु। *एकस्या शीर्षिकाया परस्पर-सम्बन्ध-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *असन्तरम् आगता शीर्षिका न परिशीलयिष्यामः। *सम्प्रेष्य विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिका: समपत्र (पोस्ट्-कार्ड्) लेखनीया। तत्र अन्य विषयः न लेखनीयः। *अधोलिखित-सङ्केताय शीर्षिका प्रेषणीया:-

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

### 'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **अधिकमीनानाम् अलाभात् किं नु खिन्नोऽसि?**

द्वितीयचित्रम् - **अभीष्टक्रीडाद्रव्यलाभात् खलु सुप्रीताऽसि।**

प्रेषकः - श्री कृ. रङ्गस्वामी, १०, अखिला, रङ्गनगरम्-६२० ००६।

---


# चन्दमामा

वार्षिक ग्राहकशुल्क (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा




प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 252.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 252.00

अपने चन्दे की रकम डिमांड ड्राफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

